KÂVYAMÂLÂ. 4.

THE

# KARPÛRAMAÑJARÎ

(With the Commentary of Vâsudeva)

AND

## THE BÂLABHÂRATA

OF

RAJAS'EKHARA.

EDITED BY

MAHÂMAHOPÂDHYÂYA PAṆDIT DURGÂPRASÂDA

AND

WÂSUDEV LAXMAṆ SHÂSTRÎ PAṆS'ÎKAR.

Third Edition.


PUBLISHED

BY

PÂNDURANG JÂWAJÎ,

PROPRIETOR OF THE "NIRṆAYA-SÂGAR" PRESS,

BOMBAY.

1927.

*Price 1 Rupee.*

काव्यमाला ४.

श्रीराजशेखरविरचिता

# कर्पूरमञ्जरी

वासुदेवकृतया टीकया समेता ।

बालभारतं च ।

जयपुरमहाराजाश्रितेन पण्डितब्रजलालसूनुना महामहोपाध्याय-
पण्डितदुर्गाप्रसादेन, मुम्बापुरवासिना पणशीकरोपाह्व-
विद्वद्वरलक्ष्मणशर्मात्मजवासुदेवशर्मणा च
संशोधितम् ।

तृतीयावृत्तिः ।

तच्च
मुम्बय्यां
पाण्डुरङ्ग जावजी
इत्येतैः स्वीये निर्णयसागराख्ययन्त्रालये मुद्रयित्वा प्राकाश्यं नीतम् ।

१९२७.

मूल्यं १ रूप्यकः ।

# राजशेखरः ।

माधवकृतशंकरविजय–भोजकृतसरस्वतीकण्ठाभरण–क्षेमेन्द्रकृतौचित्यविचारचर्चा-सुवृत्ततिलक-कविकण्ठाभरण–सोमदेवकृतयशस्तिलकचम्पू–शार्ङ्गधरपद्धति–आरोहकभग-दत्तजह्लणसंगृहीतसूक्तिमुक्तावलि–हरिकविसंगृहीतसुभाषितहारावलि–वल्लभदेवसंगृहीत-सुभाषितावलि–राजशेखरकृतबालरामायण–बालभारत–कर्पूरमञ्जरी-विद्धशालभञ्जिकादि-संस्कृतग्रन्थेषु, तथा विल्सनपण्डितकृत'हिन्दू थीएटर'–मक्षमोक्षमुल्लरकृत'इण्डिया, व्हॉट् इट् कॅन् टीच् अस्'–वेबरपण्डितकृत 'हिस्टरी ऑफ् इण्डियन् संस्कृत लिटरेचर'–अनेकपण्डितसंकलित 'इण्डियन् ॲण्टिकेरी'–डॉक्टरपीटर्सनरिपोर्ट–डॉक्टरभाण्डारकर-रिपोर्टादिइङ्ग्लिशभाषानिबद्धेषु ग्रन्थेषु च लिखितं राजशेखरविषयं सम्यग्विलोक्य विस्तरभिया चात्र तत्सर्वं परित्यज्य तन्निर्गलितार्थ एव संक्षेपेण लिख्यते.

तत्र शंकरविजये 'तन्नोदितः कश्चन राजशेखरः' इति द्वितीयसर्गप्रारम्भे, 'एवमेवम-तिमर्त्यचरित्रं सेवमानजनदैन्यलवित्रम् । केरलक्षितिपतिर्हि दिदृक्षुः प्राहिणोत्सचिवमाद-तभिक्षुः ॥' 'तेन पृष्टकुशलः क्षितिपालः स्वेन सृष्टमथ शास्त्रवकालः । हाटकायुतसमर्प-णपूर्वं नाटकत्रयमवोचदपूर्वम् ॥' इति पञ्चमसर्गे, 'कविताकुशलोऽथ केरलक्ष्माकमनः कश्चन राजशेखराख्यः । मुनिवर्यममुं मुदा वितेने निजकोटीरनिघृष्टपन्नखाग्रम् ॥ प्रथते किमु नाटकत्रयी सेत्यमुना संयमिना ततो नियुक्तः' इत्यादि चतुर्दशसर्गे च राजशेखर-कथा वर्तते. नाटकत्रयनामानि तु शंकरविजये न सन्ति. एतेन नाटकत्रयकर्ता केरलक्षि-तिपालो राजशेखरः सप्तमशतकप्रारम्भसमुद्भूतशंकराचार्यसमकालीन आसीदिति स्फुट-मेव प्रतीयते. किं तु भोजप्रबन्धादिवच्छंकरविजयस्यापि समयादिनिर्णयविषये विश्वासा-नर्हत्वान्नैतच्छ्रद्धेयम्. न चास्य शंकरविजयस्य कर्ता पण्डितशिरोमणिः सायनमाधवा-चार्यः. अयं च कश्चिदन्य एव नवकालिदासापरपर्यायो माधव इति भाति.

राजशेखरकृतेषु बालरामायणादिषु महेन्द्रपालस्य वर्णनमस्ति. तत्र 'इण्डियन् ॲ-ण्टिकेरी'नामकमासिकपुस्तकस्य पञ्चदशे भागे ११२ मिते पृष्ठे ' ॐ स्वस्तिश्रीमहो-दयसमावासितानेकगोहस्त्यश्वरथपत्तिसंपन्नस्कन्धावारात्———परमभगवतीभक्तो महा-राजश्रीभोजदेवस्तस्य पुत्रस्तत्पादानुध्यातः श्रीचन्द्रभट्टारिकादेव्यामुत्पन्नः परमभगवती-भक्तो महाराजश्रीमहेन्द्रपालदेवः श्रावस्तीभुक्तौ श्रावस्तीमण्डलान्तःपातिबालयिका-विषयसंबद्धपानीयकग्रामसमुपगतान्सर्वानेव यथास्थाननियुक्तान्प्रतिवासिनश्च समाज्ञाप-यति———संवत्सर १०० ५० ५ माघसुदि १० निबद्धम्' इति महेन्द्रपालस्य दानपत्रं मुद्रितमस्ति. अत्र पृथक्पृथग्लिखितानामङ्कानां संकलने जाता १५५ मिता संख्या. अयमेव श्रीहर्षवर्धनसंवत्सरः तत्र च ६०६ वर्षेषु योजितेषु जातः ७६१ मितः ख्रिस्तसंवत्सरः. 'अयमेव पूर्वलिखितदानपत्रसमयः'इति फ्लीटपण्डितः. एत-दनुरोधेनैव सुभाषितावल्युपोद्घाते राजशेखरसमयो लिखितः. किं त्वत्र श्रीहर्षवर्धनसंव-त्सरादिकल्पनं युक्तिरहितमिति ७६१ मितख्रिस्तसंवत्सरे राजशेखरो बभूवेत्यपि संदि-

स्यैव. दानपत्रं त्वेतद्राजशेखरवर्णितमहेन्द्रपालस्यैवास्ति, यतोऽस्मिन्दानपत्रे महोदयस्य नाम वर्तते. राजशेखरकृतबालभारतप्रस्तावनायां च 'कथमेते महोदयमहानगरस्थीभवन्त-स्ता विद्वांसः सामाजिकाः' इत्याद्यस्ति. महोदयमिति कान्यकुब्ज(कनौज)स्य नामान्तरम्. कान्यकुब्जं महोदयम्' 'कन्याकुब्जं गाधिपुरं कौशं कुशस्थलं च तत्' इति हैमनाममालायाम्, 'महोदयः कान्यकुब्जे' इति विश्वप्रकाशमेदिनीकोषयोश्च वर्तते. बालरामायणे दशमेऽङ्केऽपि 'लक्ष्मणः—इदं पुनस्ततोऽपि मन्दाकिनीपरिक्षिप्तं महोदयं नाम नगरं दृश्यते । रामः—शश्वत्सुधामवसुधामहितं द्विषद्भिर्नो गाहितं भवति गाधिपुरं पुरस्तात् । वैदेहि देहि शफरीसदृशं दृशं तदस्मिन्नितम्बिनि नितम्बवहद्युसिन्धौ ॥ ८८ ॥ इदं द्वयं सर्वमहापवित्रं परस्परालंकरणैकहेतुः । पुरं च हे जानकि, कान्यकुब्जं सरिच्च गौरीपतिमौलिमाला ॥८९॥' इत्याद्यस्ति. एतेन राजशेखरकविः कान्यकुब्जमहीपतेर्महेन्द्रपालस्य सभायामासीदिति ज्ञायते. बाणभट्ट-भवभूति-वाक्पतिराज-श्रीहर्षादयोऽन्येऽपि बहवो महाकवयः कान्यकुब्जनरपतीनां हर्षवर्धनयशोवर्मप्रभृतीनां सभासु स्वस्वसमय आसन्.

राजशेखरो दशमे शतके बभूवेति भाण्डारकरपण्डितः, एवमेव वेबरपण्डितः, एकादशशतकसमाप्तौ द्वादशशतकप्रारम्भे वेति विल्सनपण्डितः, बालरामायणकर्ता राजशेखरश्चतुर्दशशतक आसीदिति च भट्टमोक्षमुल्लरनामा वदति.

वस्तुतस्तु राजशेखरकविः ८८४ मितख्रिस्तसंवत्सरादनन्तरम् ९५९ संवत्सरात्पूर्वं मध्ये वर्तमानेषु ७५ वर्षेषु बभूव. यतः ८८४ मितसंवत्सरपर्यन्तं कश्मीरान्पालयितुरवन्तिवर्मणः समकालीनयोरानन्दवर्धनरत्नाकरयो राजशेखरकृतौ स्तुतिश्लोकौ सूक्तिमुक्तावलि-सुभाषितहारावल्योर्विशिष्टकविप्रशंसाप्रकरणे लभ्येते. तत्कर्ता कश्चिदन्यो राजशेखर इत्यपि न वक्तुं युक्तम्, यतो बालरामायणवर्णितानामकालजलद-तरल-सुरानन्दकवीनां राजशेखरपूर्वपुरुषाणां नातिप्रसिद्धानामपि देशकुलनामग्रहणपूर्वकं वर्णनश्लोकास्तत्रैव विद्यन्ते, तन्मध्य एव रत्नाकरानन्दवर्धनयोरपि वर्णनमस्ति. तेन सर्वेषां श्लोकानां कर्ता एक एव राजशेखरः, अथ च ८८१ मिते शके ९५९ मिते वा ख्रिस्ताब्दे जैनसोमदेवेन यशस्तिलकचम्पूः प्रणीता. तत्र तृतीय आश्वासे माघादिकविनामसु राजशेखरस्यापि नाम वर्तते. तस्मात्तत्कालात्प्राचीनो राजशेखरः न च प्रबन्धकोषकर्तुर्जैनराजशेखरसूरेस्तत्र नामास्तीति वक्तव्यम्. प्रबन्धकोषस्य १३४७ मिते संवत्सरे निर्माणाद्राजशेखरसूरेर्यशस्तिलककर्तुरर्वाचीनत्वात्.

राजशेखरो ब्राह्मणः क्षत्रियो वासीदिति संदिग्धमेव. यतो बालरामायणादिषु 'उपाध्यायः' 'गुरुः' इत्यादि पदैरात्मानं विशिनष्टि, तेन तस्य ब्राह्मणत्वं स्फुटं प्रतीयते, क्षत्रियस्याध्यापनादिष्वनधिकारात्. राज्ञां शेखरो राजशेखर इति तु समासो नोचितः. राजा चन्द्रः शेखरो यस्य स इत्युचितः समासः. यतः कर्पूरमञ्जरीप्रस्तावनायाम् 'रजनीवल्लभशिखण्डः' इति राजशेखरनाम्नः पर्यायशब्दो वर्तते. रजनीवल्लभश्चन्द्रः शिखण्डः शेखरो यस्य इति तदर्थः. अथ च कर्पूरमञ्जरीप्रस्तावनायामेव 'चाहमानकुलमौलिमालिका

राजशेखरकवीन्द्रगेहिनी' इत्याद्यस्ति. चाहमानकुलं 'चौहाण' इति प्रसिद्धं क्षत्रियकुलम्. यस्मिन्हम्मीरपृथ्वीराजाद्यः क्षितिपाला अभूवन्. तत्कुलप्रसूता च कथमस्मिन्युगे ब्राह्मणस्य भार्या भवितुमर्हति? तस्माद्राजशेखरः क्षत्रिय आसीदिति कथमपि वार्ता नानुचितं भाति.

राजशेखरो महाराष्ट्रदेशोत्पन्नश्चेदिदेशोत्पन्नो वेत्यत्रापि संदेह एव. यतो बालरामायणप्रस्तावनायां स्वप्रपितामहमकालजलदं महाराष्ट्रचूडामणिं वदति. सूक्तिमुक्तावल्यादिस्थकविवर्णनश्लोकेषु स्वपूर्वपुरुषं सुरानन्दं चेदिमण्डलमण्डनं च वदति. भाति चायं चेदिदेशोद्भवः, चेदिदेशमहीपतीनां करचुलीनामेव विद्धशालभञ्जिकादिषु प्रायशो वर्णनात्. एतत्सर्वमग्रे विशिष्टकविवर्णनश्लोकेषु टिप्पण्यां स्फुटीभविष्यति. बिल्हणकविर्यथा स्वदेशं कश्मीरं परित्यज्य कर्णाटमहीपतेराश्रये जगाम, तद्वदयमपि स्वदेशं विहाय कान्यकुब्जमहीपालं शिश्रिये.

दशरूपकावलोक-सरस्वतीकण्ठाभरण-क्षीरस्वामिकृतामरकोषटीका-मुकुटकृतामरकोषटीका-श्रीमदभिनवगुप्ताचार्यकृतध्वन्यालोकलोचन-काव्यप्रकाश-साहित्यदर्पण-शार्ङ्गधरपद्धति-सूक्तिमुक्तावलि-सुभाषितावलि-सुभाषितहारावल्यादिषु राजशेखरश्लोकाः, श्रीकण्ठचरितसमाप्तिसर्गे राजशेखरस्य नाम च वर्तते. एते सर्वेऽपि ग्रन्था अस्मिन्निर्णीतराजशेखरसमयादर्वाचीनाः. केवलं क्षीरस्वामिविषये मनाक्संदेहः. काश्मीरदेशमहीपालस्य जयापीडस्याध्यापकः क्षीराभिधः कश्चन शब्दविद्योपाध्याय आसीत् (राजतरङ्गिणी ४।४८८). स एवामरकोषटीकाकर्ता क्षीरस्वामीति न सम्यक्. यतः क्षीरस्वामिकृतामरकोषटीकायां 'श्रीभोजः' इति नाम बहुषु स्थलेषु वर्तते. भोजश्चैकादशशतकमध्यभाग आसीत्. तस्मादेकादशशतकमध्यभागादर्वाचीनः क्षीरस्वामी कथमष्टमशतकोत्तरार्धसमुद्भूतस्य जयापीडनृपतेरध्यापको भवितुमर्हति? तस्मात्क्षीरोपाध्यायात्क्षीरस्वामी भिन्न एव.

बालरामायणम्, बालभारतम् (प्रचण्डपाण्डवम्), कर्पूरमञ्जरी, विद्धशालभञ्जिका चेति ग्रन्थचतुष्टयमेव राजशेखरकृतं प्राप्यते. तत्र बालरामायणं मूलमात्रमेव, बालभारतस्य केवलमङ्कद्वयम्, नारायणदीक्षितकृतटीकासमेता विद्धशालभञ्जिका, वासुदेव-धर्मदास-कामराज-कृष्णसूनुकृताभिष्टीकाभिः समेता कर्पूरमञ्जरी च लभ्यते. बालरामायणे भर्तृमेण्ठ-भवभूति-शंकरवर्मा-अकालजलद-तरल-सुरानन्द-कविराजानाम्, कर्पूरमञ्जर्यां च मृगाङ्कलेखाकथाकारापराजित-हाल-हरिचन्द्र-नन्दिचन्द्र-कोटिसानां कवीनां नामानि सन्ति. तेषु शंकरवर्मापराजितौ राजशेखरसमकालीनौ, अकालजलद-तरल-सुरानन्द-कविराजा राजशेखरस्य पूर्वपुरुषाः. तेषु कविराजो राघवपाण्डवीयकर्ता, भर्तृमेण्ठ-भवभूति-हाल-हरिचन्द्राः प्रसिद्धा एव, नन्दिचन्द्र-कोटिसौ चाप्रसिद्धौ स्तः. पूर्वोक्तग्रन्थचतुष्टयप्रस्तावनासु राजशेखरेण रघुकुलचूडामणिर्महेन्द्रपालः स्वशिष्यत्वेन वर्णितः. बालभारतप्रस्तावनायां तु निर्भयनरेन्द्रसूनोर्महीपालदेवस्यापि वर्णनमस्ति. निर्भयराजोऽपि राजशे-

खरस्य शिष्य एवासीत्. 'बालकविः कविराजो निर्भयराजस्य तथोपाध्यायः' इति कर्पूरमञ्जरीप्रस्तावनायाम्. 'विभ्रमराजस्य तथोपाध्यायः' इति कामराजसंमतः पाठः. निर्भयराज इति महेन्द्रपालस्यैव नामान्तरमिति केचित्. महीपालदेवश्च चण्डकौशिकप्रस्तावनायामार्यक्षेमीश्वरेणापि वर्णितः.

'कर्णाटीदशनाङ्कितः शितमहाराष्ट्रीकटाक्षाहतः प्रौढान्ध्रीस्तनपीडितः प्रणयिनीभ्रूभङ्गवित्रासितः । लाटीबाहुविवेष्टितश्च मलयस्त्रीतर्जनीतर्जितः सोऽयं संप्रति राजशेखरकविर्वाराणसीं वाञ्छति ॥' अयं श्लोक औचित्यविचारचर्चायाम्, 'दातुर्वारिधरस्य—' इत्यादि श्लोकाः सुभाषितावल्याम्, 'भासो रामिलसौमिलौ' इत्याद्याः श्लोकाः शार्ङ्गधरपद्धतौ, 'अकालजलदेन्दोः सा' इत्याद्या बहवः श्लोकाः सूक्तिमुक्तावलि-सुभाषितहारावल्यो राजशेखरनाम्ना समुद्धृताः सन्ति. ते च प्रसिद्धेषु राजशेखरग्रन्थेषु न प्राप्यन्ते. तस्मात्सन्त्यन्येऽपि केचन राजशेखरकृता ग्रन्था इति ज्ञायते. 'विद्धि नः षट्प्रबन्धान्' इति च बालरामायणप्रस्तावनायां स्वयमेव राजशेखरो वदति. अस्य कवेः शार्दूलविक्रीडितच्छन्दोनिबद्धाः श्लोका अतिसमीचीनाः सन्ति. शार्दूलक्रीडितैरेव प्रख्यातो राजशेखरः । शिखरीव परं वक्रैः सोल्लेखैरुच्चशेखरः ॥' इति सुवृत्ततिलके क्षेमेन्द्रः 'आगस्कारिणि कैटभप्रमथने तत्ताडनार्थं रुषा नाभीपङ्कजमक्षतां गमयितुं जाते प्रयत्ने श्रियः । स्वावासोन्मथनोपपादितभयभ्रान्तात्मनस्तत्क्षणादब्रह्मण्यपराः पुरातनमुनेर्वाग्वृत्तयः पान्तु वः ॥' अयं श्लोकः सूक्तिमुक्तावलौ राजशेखरान्तेवासिनाम्ना समुद्धृतः. तेन राजशेखरस्य कश्चन शिष्योऽपि कविरासीत्.

सूक्तिमुक्तावलि-सुभाषितहारावलि-शार्ङ्गधरपद्धतिषु राजशेखरकृताः प्राचीनकविप्रशंसाश्लोकाः केचन समुपलभ्यन्ते, ते सर्वेऽप्यत्युक्तत्वादत्र कविनामक्रमेण समुद्ध्रियन्ते—

अकालजलदेन्दोः सा हृद्या वचनचन्द्रिका ।
नित्यं कविचकोरैर्या पीयते न च हीयते ॥

(सूक्तिमुक्तावलिः, सुभाषितहारावलिः.)

अकालजलदकवी राजशेखरस्य प्रपितामह आसीत्. 'अकालजलदस्य प्रणप्तुः' इति विद्धशालभञ्जिकाप्रस्तावनायाम्. 'स मूर्तो यत्रासीद्गुणगण इवाकालजलदः सुरानन्दः सोऽपि श्रवणपुटपेयेन वचसा । न चान्ये गण्यन्ते तरलकविराजप्रभृतयो महाभागस्तस्मिन्नयमजनि यायावरकुले ॥ तदामुष्यायणस्य महाराष्ट्रचूडामणेरकालजलदस्य चतुर्थो दौर्दुकिः (दौहिकिः) शीलवतीसूनुरुपाध्यायश्रीराजशेखरः' इति च बालरामायणप्रस्तावनायां वर्तते. अकालजलदकृतः कोऽपि ग्रन्थो नाद्याप्युपलब्धः. केवलं 'भेकैः कोटरशायिभिः' इत्यादिश्लोकः शार्ङ्गधरपद्धत्यादिषु लभ्यते.

ध्वनिनातिगभीरेण काव्यतत्त्वनिवेशिना।
आनन्दवर्धनः कस्य नासीदानन्दवर्धनः॥

(सूक्तिमुक्तावलिः, सुभाषितहारावलिः.)

काव्यालोकाद्यनेकग्रन्थकर्ता काश्मीरदेशोद्भवोऽवन्तिवर्मनृपतिसमकालीनोऽयमानन्दवर्धनाचार्यः प्रसिद्ध एव.

अकालजलदश्लोकैश्चित्रमात्मकृतैरिव।
जातः कादम्बरीरामो नाटके प्रवरः कविः॥

(सूक्तिमुक्तावलिः.)

सरस्वतीव कर्णाटी विजयाङ्का जयत्यसौ।
या वैदर्भगिरां वासः कालिदासादनन्तरम्॥

(सूक्तिमुक्तावलिः, सुभाषितहारावलिः.)

'एकोऽभून्नलिनात्ततश्च पुलिनाद्वल्मीकतश्चापरस्ते सर्वे कवयो भवन्ति गुरवस्तेभ्यो नमस्कुर्महे। अर्वाञ्चो यदि गद्यपद्यरचनैश्चेतश्चमत्कुर्वते तेषां मूर्ध्नि ददामि वामचरणं कर्णाटराजप्रिया॥' एतच्छ्लोककर्त्री कदाचिदियमेव विजयाङ्का कर्णाटी स्यात्.

एकोऽपि जीयते हन्त कालिदासो न केनचित्।
शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु॥

(सूक्तिमुक्तावलिः, सुभाषितहारावलिः.)

जानकीहरणं कर्तुं रघुवंशे स्थिते सति।
कविः कुमारदासश्च रावणश्च यदि क्षमः॥

(सूक्तिमुक्तावलिः.)

काव्यमालाप्रथमगुच्छके औचित्यविचारचर्चायां १४४ पृष्ठे कुमारदासनामोपरि टिप्पणं विलोकनीयम्.

दूरादपि सतां चित्ते लिखित्वाश्चर्यमञ्जरीम्।
कुलशेखरवर्मा श्यां(?) चकाराश्चर्यमञ्जरीम्॥

(सूक्तिमुक्तावलिः.)

आश्चर्यमञ्जरी कथन ग्रन्थः. 'पाणिनिप्रत्याहारो वा महाप्राणसमाश्लिष्टो यथालिङ्गितश्च समुद्रः, इत्याश्चर्यमञ्जरी' इत्यमरकोषटीकायां वारिवर्गे झषपदव्याख्याने मुकुटः. 'केरलोत्पत्ति-केरलविशेषमाहात्म्यनामकग्रन्थाभ्यां समुद्धृते कस्मिंश्चन लेखे केरलदेशक्षितिपालः कुलशेखरः ३३२ मिते खिस्तसंवत्सरे आसीदिति दर्शितम्' इति वामन-शिवराम-आपटेप्रणीतायां राजशेखरवर्णनपुस्तिकायां १२ पृष्ठे टिप्पण्यां द्रष्टव्यम्.

कुलशेखरनृपतिकृता मुकुन्दमाला प्रसिद्धैव. कुलशेखर एव राजशेखर इति मिथ्यैव केरलीयानां प्रवादः, यतो राजशेखरेणात्र कुलशेखरो वर्णितः.

आदौ गणपतिं वन्दे महामोदविधायिनम् ।
विद्याधरमणेर्यस्य पूज्यते कण्ठगर्जितम् ॥

(सूक्तिमुक्तावलिः, सुभाषितहारावलिः.)

'महामदविधायिनम्' इति पुस्तकान्तरपाठः.

हुता शिखिनि गौणाढ्या लोकशेषापि सा कथा ।
सुरलीढेन्दुलेखेव लोके पूज्यतमाभवत् ।

(सुभाषितहारावलिः.)

गुणाढ्यप्रणीता बृहत्कथा षड्लक्षमितासौ दग्धा, केवलमेकलक्षमितावशिष्टा, इति कथासरित्सागरेऽष्टमतरङ्गे कथा द्रष्टव्या.

अनुप्रासिनि संदर्भे गोनन्दनसमः कुतः ।
यथार्थनामतैवास्य यद्वाग्वदति चारुताम् ॥

(सूक्तिमुक्तावलिः.)

यायावरकुलश्रेणेर्हारयष्टेश्च मण्डनम् ।
सुवर्णबन्धरुचिरस्तरलस्तरलो यथा ॥

(सूक्तिमुक्तावलिः, सुभाषितहारावलिः.)

तरलो हारमध्यमणिरपि. अयमपि कवी राजशेखरस्य पूर्वपुरुषः. पूर्वमकालजलदश्लोकटिप्पणे लिखितं बालरामायणप्रस्तावनापद्यं विलोकनीयम्. राजशेखरोऽप्यात्मानं यायावरकुलोत्पन्नमेव स्वग्रन्थेषु वर्णयति.

कर्तुं त्रिलोचनादन्यः कः पार्थविजयं क्षमः ।
तदर्थः शक्यते द्रष्टुं लोचनद्वयिभिः कथम् ॥

(सुभाषितहारावलिः.)

त्रयोऽग्नयस्त्रयो वेदास्त्रयो देवास्त्रयो गुणाः ।
त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः ॥

(शार्ङ्गधरपद्धतिः, सुभाषितहारावलिः.)

दशकुमारचरितम्, काव्यादर्शश्चेति प्रबन्धद्वयमेव लभ्यते. मल्लिकामारुतकर्ता उद्दण्डनामा रङ्गनाथकविः, न तु दण्डी. कलापरिच्छेद-छन्दोविचित्यादयः ग्रन्थान्तरेऽपि दण्डिकृता ग्रन्था इति काव्यादर्शाज्ज्ञायते. कविरयं सप्तमशतकप्रारम्भसमुद्भूतः.

सरस्वतीपवित्राणां जातिस्तत्र न कारणम् ।
व्यासस्पर्धी कुलालोऽभूद्यद्द्रोणो भारते कविः ॥

(शार्ङ्गधरपद्धतिः.)

पुस्तकान्तरे 'न देहिनाम्' इति पाठः.

द्विसंधाने निपुणतां स तां चक्रे धनंजयः ।
यया जातं फलं तस्य सतां चक्रे धनं जयः ॥

(सूक्तिमुक्तावलिः, सुभाषितहारावलिः.)

वसुदेवश्रीदेवीसूनुर्द्विसंधानकाव्यकर्तायं धनंजयमहाकविर्जैन आसीत्. राघवपाण्डवीयमपि द्विसंधानकाव्यस्य नामान्तरम्. कविराजकृतं प्रसिद्धं मुद्रितं च राघवपाण्डवीयकाव्यं भिन्नम्.

स्वस्ति पाणिनये तस्मै यस्य रुद्रप्रसादतः ।
आदौ व्याकरणं काव्यमनु जाम्बवतीजयम् ॥

(सूक्तिमुक्तावलिः, सुभाषितहारावलिः.)

'पयःपृषन्तिभिः स्पृष्टा वान्ति वाताः शनैः शनैः, इति जाम्बवतीविजयवाक्यम्', 'स पार्षदैरम्बरमापुपूरे, इति जाम्बवत्यां पाणिनिः' इत्यादि जाम्बवतीजयकाव्यस्यैकदेशा मुकुटेनामरकोषटीकायामुदाहृताः सन्ति. 'तथाहि पाणिनेः पातालविजये महाकाव्ये—संध्यावधूं गृह्य करेण' इत्यादि काव्यालंकारटीकायां नमिसाधुना चोदाहृतम्. तेन जाम्बवतीजयस्य पातालविजयमित्यपि नामान्तरं भाति. सुभाषितावलि-सदुक्तिकर्णामृतादिषु बहवः पाणिनिश्लोकाः प्राप्यन्ते. 'स्पृहणीयत्वचरितं पाणिनेरुपजातिभिः । चमत्कारैकसाराभिरुद्यानस्येव जातिभिः ॥' इति सुवृत्ततिलकस्थक्षेमेन्द्रश्लोकेनोपजातिच्छन्दोनिबद्धाः पाणिनिश्लोका अत्युत्तमाः सन्तीति ज्ञायते. य एव व्याकरणसूत्रकर्ता स एव जाम्बवतीजयकाव्यस्य कर्तेत्यस्माद्राजशेखरश्लोकात्स्फुटं प्रतीयते. तस्मात्पाणिनिद्वयकल्पनं व्यर्थमेव.

प्रद्युम्नाज्ञापरस्येह नाटके पटवो गिरः ।
प्रद्युम्नाज्ञापरस्येह पौष्पा अपि शराः स्वराः ॥

(सूक्तिमुक्तावलिः.)

सहर्षचरितारम्भाद्भुतकादम्बरीकथा ।
बाणस्य वाण्यनार्येव स्वच्छन्दा भ्रमति क्षितौ ॥

माघेन हृदि कम्पेन यन्मन्दोऽपि पदक्रमः।
प्रायः कविकुरङ्गाणां चापलं तत्र कारणम्॥

(सूक्तिमुक्तावलिः.)

सूक्तीनां स्मरकेलीनां कलानां च विलासभूः।
प्रभुदेवी कविर्लाटी गतापि हृदि तिष्ठति॥

(सूक्तिमुक्तावलिः, सुभाषितहारावलिः.)

कृत्स्नप्रबोधकृद्वाणी भा रवेरिव भारवेः।
माघेनेव च माघेन कम्पः कस्य न जायते॥

(सुभाषितहारावलिः.)

भासनाटकचक्रेऽपि च्छेकैः क्षिप्ते परीक्षितुम्।
स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः॥

(सूक्तिमुक्तावलिः.)

केषांचन नाटकानां कर्ता भासकविः कालिदासात्प्राचीनः. यतो मालविकाग्निमित्रप्रस्तावनायां भासकवेर्नाम वर्तते. 'सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः। सपताकैर्यशो लेभे भासो देवकुलैरिव॥' इति हर्षचरितप्रारम्भे बाणभट्टः 'पेया सुरा प्रियतमामुखमीक्षणीयं ग्राह्यः स्वभावललितो विकटश्च वेषः। येनेदमीदृशमदृश्यत मोक्षवर्त्म दीर्घायुरस्तु भगवान्स पिनाकपाणिः॥' इति यशस्तिलकचम्प्वां भासकवेः श्लोकः अन्येऽपि भासकवेः श्लोकाः सुभाषितावल्यादिषु प्राप्यन्ते. तत्कृतो ग्रन्थस्तु नाद्याप्येकोऽप्युपलब्धः. किंतु स्वप्नवासवदत्तनाटकस्य 'संचितपक्ष्मकपाटं—' इत्याद्येकार्या श्रीमदभिनवगुप्तेन ध्वन्यालोकलोचनस्य तृतीयोद्योत उदाहृतास्ति.

कालञ्जरपतिश्चक्रे भीमटः पञ्चनाटकीम्।
प्राप प्रबन्धराजत्वं तेषु स्वप्नदशाननम्॥

(सूक्तिमुक्तावलिः, सुभाषितहारावलिः.)

'कलिञ्जरपतिः' इति पुस्तकान्तरपाठः. कालञ्जरगिरिः प्रयागनगराद्वायुकोणे द्वादशयोजनान्तरे वर्तते. तदुपलक्षितदेशाधिपतिरयं भीमटः. 'दृष्टे चन्द्रमसि' इत्यादिश्लोकः सूक्तिमुक्तावलौ भीमटनाम्ना समुद्धृतोऽस्ति.

अहो प्रभावो वाग्देव्या यन्मातङ्गदिवाकरः।
श्रीहर्षस्याभवत्सभ्यः समो बाणमयूरयोः॥

(शार्ङ्गधरपद्धतिः.)

पुस्तकान्तरे 'चण्डालदिवाकरः' इति पाठः.

दर्पं कविभुजंगानां गता श्रवणगोचरम् ।
विषविद्येव मायूरी मायूरी वाङ् निकृन्तति ॥

(सूक्तिमुक्तावलिः.)

मायूराजसमो जज्ञे नान्यः करचुलिः कविः ।
उदन्वतः समुत्तस्थुः कति वा तुहिनांशवः ॥

(सूक्तिमुक्तावलिः, सुभाषितहारावलिः.)

हैहयवंशोद्भवाः करचुलि(कलचुरि)नामानः केचन क्षत्रिया अद्यापि 'रीमा'(रेवा) । राज्ये वर्तन्ते. राजशेखरसमये चेदिदेशान्तर्गता माहिष्मती नाम नगरी तेषां राजधान्यासीत्. 'यन्मेखला भवति मेकलशैलकन्या वीतेन्धनो वसति यत्र च चित्रभानुः । तामेष पाति कृतवीर्ययशोवतंसां माहिष्मतीं कलचुरेः कुलराजधानीम् ॥' इति बालरामायणम् (३।३५). मेकलसुता नर्मदा. सा च माहिष्मती इन्दोरनगराद्दक्षिणदिशि पञ्चषड्योजनान्तरे नर्मदादक्षिणतटेऽधुना 'महेश्वर' इति नाम्ना प्रसिद्धा इन्दोरनृपतेरेवाधीना वर्तते. चेदिदेश एव नर्मदोपकण्ठे त्रिपुरीनाम द्वितीयापि कलचुरिराजधान्यासीत्. 'सीतास्वयंवरनिदानधनुर्धरेण दग्धात्पुरत्रितयतो विभुना भवेन । खण्डं निपत्य भुवि या नगरी बभूव तामेष चैद्यतिलकस्त्रिपुरीं प्रशास्ति ॥' इत्यपि बालरामायणम् (३।३८). 'त्रिपुरी चेदिनगरी' इति हैमनाममाला (४।४१). राजशेखरकृतविद्धशालभञ्जिकाकथानायकः करचुलिकुलोत्पन्नोऽस्यामेव त्रिपुर्यामासीत्. 'करचुलितिलको वर्तते चक्रवर्ती' इति, 'स्वस्तिश्रीमत्त्रिपुर्यां तुहिनकरसुतावीचिवाचालितायाम्' इति च विद्धशालभञ्जिकाचतुर्थेऽङ्के वर्तते, तुहिनकरसुता सोमोद्भवा नर्मदा. सा च त्रिपुरी इदानीं 'तेवुर' इति नाम्ना प्रसिद्धा जबलपुरसमीपे वर्तते इति दक्षिणदेशेतिहासपुस्तके (३७ पृष्ठे) पण्डितवरभाण्डारकरः करचुलिवंशोद्भवोऽयं मायूराजकविश्चेदिदेश एवोत्पन्नः स्यात्. 'गण्डूषाशोषिताब्धिप्रकटजलधरोत्फालजातस्मितानां हेलाकृष्टार्कचन्द्राभिनवकृतमहाकुण्डलाभोगभाजाम् । पीनोरःस्थापिताशाद्विरदमदमषीमांसलस्थासकानां दूरं यातस्य वत्स स्मरति दशशिरास्त्वच्छिशुक्रीडितानाम् ॥' इत्याद्याः केचन श्लोका मायूराजनाम्ना समुद्धृताः सूक्तिमुक्तावल्यादिषु प्राप्यन्ते. तद्विलोकनेन च मायूराजः कस्यचिद्रामायणकथानुकूलनाटकस्य कर्तासीदिति ज्ञायते.

(वक्रोक्त्या मेण्ठराजस्य वहन्त्या सृणिरूपताम् ।
आविद्धा इव धुन्वन्ति मूर्धानं कविकुञ्जराः ॥)

मेण्ठो हस्तिपकः; (पक्षे) राजशेखरेण बालभारत-बालरामायणप्रस्तावनायां गृहीतनामा कश्मीरदेशोद्भवो हयग्रीववधकाव्यकर्ता विक्रमादित्यसमकालीनो भर्तृमेण्ठः कविः.

अयं श्लोकः सूक्तिमुक्तावलिसुभाषितहारावल्यो राजशेखरश्लोकबहिर्भूतस्तत्समीप एव तिष्ठति. भाति चायमपि राजशेखरस्यैवेत्यत्रोऽत्र गृहीतः.

मा स्म सन्तु हि चत्वारः प्रायो रत्नाकरा इमे।
इतीव स कृतो धात्रा कविरत्नाकरोऽपरः॥

(सूक्तिमुक्तावलिः, सुभाषितहारावलिः.)

हरविजयकाव्यकर्ता नवमशतकोत्तरभागे कश्मीरदेशे समुत्पन्नो रत्नाकरमहाकविः प्रसिद्ध एव.

तौ शूद्रककथाकारौ रम्यौ रामिलसौमिलौ।
काव्यं ययोर्द्वयोरासीदर्धनारीश्वरोपमम्॥

(सुभाषितहारावलिः.)

सौमिलस्य नाम मालविकाग्निमित्रप्रस्तावनायां वर्तते. तेन कालिदासात्सौमिलस्तस्मादपि शूद्रकः प्राचीनः. 'सव्याधेः कृशता' इत्यादि श्लोकः शार्ङ्गधरपद्धतौ रामिलसौमिलयोर्नाम्ना समुद्धृतः. 'परपुरुषादिव सवितुः' इत्यादि रामिलश्लोकः सुभाषितावलावप्यस्ति.

यथार्थता कथं नाम्नि मा भूद्वररुचेरिह।
व्यधत्त कण्ठाभरणं यः सदा रोहणप्रियः॥

(सूक्तिमुक्तावलिः.)

कात्यायनापरनामा वररुचिः प्रसिद्ध एव. तत्कृतो व्याकरणवार्तिकपाठः प्राकृतसूत्राणि च सर्वत्र सुलभान्येव. सुभाषितावल्यादिषु बहवो वररुचिकृताः श्लोकाः समुपलभ्यन्ते, तस्मात्किमपि काव्यमपि वररुचिना कृतमेव.

के वैकटनितम्बेन गिरां गुम्फेन रञ्जिताः।
निन्दन्ति निजकान्तानां न मौग्ध्यमधुरं वचः॥

(सूक्तिमुक्तावलिः, सुभाषितहारावलिः.)

स्थिता माध्वीकपाकत्वान्निसर्गमधुरापि हि।
किमपि स्वदते वाणी केषांचिद्यपि शांकरी॥

(सूक्तिमुक्तावलिः.)

अत्र बालरामायणप्रस्तावनायां गृहीतनामा स्वसमकालीनः कृष्णशंकरवर्मा राजशेखरस्य विवक्षितः, न तु शंकराचार्यः कश्चिदन्यो वा शंकर इति भाति.

शब्दार्थयोः समो गुम्फः पाञ्चाली रीतिरुच्यते।
शीलाभट्टारिकावाचि बाणोक्तिषु च सा यदि॥

(सूक्तिमुक्तावलिः, शार्ङ्गधरपद्धतिः.)

पृथिव्यां प्रथिता गाथा सातवाहनभूभुजा ।
व्यधुर्धृतेस्तु विस्तारमहो चित्रपरम्परा ॥

(सूक्तिमुक्तावलिः.)

पार्थस्य मनसि स्थानं लेभे खलु सुभद्रया ।
कवीनां च वचोवृत्तिचातुर्येण सुभद्रया ॥

(सूक्तिमुक्तावलिः. सुभाषितहारावलिः.)

'दुग्धं च यत्तदनु' इत्यादिश्लोकः सुभद्राकृतः सुभाषितावलौ वर्तते.

नदीनां मेकलसुता नृपाणां रणविग्रहः ।
कवीनां च सुरानन्दश्चेदिमण्डलमण्डनम् ॥

(सूक्तिमुक्तावलिः.)

मेकलसुता नर्मदा. सुरानन्दो राजशेखरस्य पूर्वपुरुष इत्यकालजलदवर्णनश्लोकटिप्पणसमुद्धृते बालरामायणप्रस्तावनापद्ये द्रष्टव्यम्. चेदिदेशो डाहलापरपर्यायः. 'त्रैपुरास्तु डाहलाः स्युश्चैद्यास्ते चेदयश्च ते' इति हैमनाममाला (४।२२). 'डाहलाश्चेदयश्चैद्याः' इति त्रिकाण्डशेषे भूमिवर्गः. 'नीत्वा गङ्गाधरधरतां डाहलाधीशधाम्नि' इति विक्रमाङ्कदेवचरितम् ( १८।९५).

भासो रामिलसोमिलौ वररुचिः श्रीसाहसाङ्कः कवि-
र्माघो भारविकालिदासतरलाः स्कन्धः सुबन्धुश्च यः ।
दण्डी बाणदिवाकरौ गणपतिः कान्तश्च रत्नाकरः
सिद्धा यस्य सरस्वती भगवती के तस्य सर्वेऽप्यमी ॥

( शार्ङ्गधरपद्धतिः.)

एषु कविषु साहसाङ्क-स्कन्धयोर्विषये न किमपि ज्ञायते. कान्त इति तु रत्नाकरविशेषणम्.

अस्य संपूर्णलेखस्य निष्कर्षस्त्वयम्—यन्महाराष्ट्रचेदिदेशयोरन्यतरोद्भवः कान्यकुब्जमहीपालस्य महेन्द्रपालस्याश्रितो ब्राह्मणः क्षत्रियो वा राजशेखरकविः ८८४ खिस्तसंवत्सरादनन्तरं ९५९ संवत्सरात्पूर्वं चासीत्. राजशेखरस्य विस्तरेण वर्णनं तु पुण्यपत्तनस्थार्यभूषणयन्त्रालये मुद्रितायां फर्ग्युसनपाठशालाध्यक्षेण एम्. ए. पदमण्डितेन शिवरामसूनुवामनपण्डितेन प्रणीतायाम् 'राजशेखर, हिज् लाइफ् ऍण्ड रायटिङ्गस्' इति नामाङ्कितायां पुस्तिकायां द्रष्टव्यम्. इत्यलं बहुभिः पिष्टस्य मुहुः पेषणेन.

---

# काव्यमाला ।



## महाकविश्रीराजशेखरकृता
## कर्पूरमञ्जरी ।

वासुदेवकृतया टीकया समेता ।



प्रथमं जवनिकान्तरम् ।

भद्दं भोदु सरस्सईअ कइणो णन्दन्तु वासाइणो
अण्णाणं वि परं पअट्टदु वरा वाणी छइल्लप्पिआ ।
वच्छोमी तह माअही फुरदु णो सा किं च पञ्चालिआ
रीदीयो विलिहन्तु कव्वकुसला जोह्णं चओरा विअ ॥ १ ॥

---

दशास्योद्यदास्यच्छिदं जानकीशं कुलोपास्यमानम्य साष्टाङ्गपातम् ।
गणेशं च गण्डोल्लसद्भृङ्गसङ्गं हरोत्साङ्गसङ्गांश्च गङ्गातरङ्गान् ॥
तातं प्रभाकरं नत्वा मातरं गोमतीमपि ।
कर्पूरमञ्जरीटीका वासुदेवेन तन्यते ॥

कर्पूरमञ्जर्याख्यसट्टकारम्भे सूत्रधार आशीरूपां नान्दीं पठति—

**भद्दमिति ।**

भद्रं भवतु सरस्वत्याः कवयो नन्दन्तु व्यासादयः
अन्येषामपि परं प्रवर्ततां वरा वाणी विदग्धप्रिया ।
वैदर्भी तथा मागधी स्फुरतु नः सा किं च पाञ्चालिका
रीतिका विलिहन्तु काव्यकुशला ज्योत्स्नां चकोरा इव ॥

अत्र च व्यासादय इत्यादौ सरस्वत्या इत्येतत्प्रभृति षष्ठ्यन्तत्वोपक्रमभङ्गाभासेऽपि भवत्वित्यादिप्रधानक्रियापदानां लोडन्तत्वप्रक्रमः सर्वत्राविहत इति न प्रक्रमभङ्गःशङ्क्यः । तेन रीतिर्नाम शब्दगुणः । यथोक्तं सरस्वतीकण्ठाभरणे—'उपक्रमस्य निर्वाहो रीतिरित्यभिधीयते' इति । सरस्वत्याः सततं भद्रभाजनत्वादप्राप्तप्रार्थनारूपाशीरसंभवो यद्यपि, तथापि स्वसंबन्धिन्या वा तस्या मङ्गलाशंसनं संभवत्येव । अत एवान्येषामपीत्यत्र आशंसनम् । 'भवेत्तद्भिन्नवचनं यद्भिन्नवचनोपमम्' इत्युक्तत्वाज्ज्योत्स्नामित्युपमाने भिन्नवचनतादोषो न शङ्क्यः । 'यद्भिन्नलिङ्गमित्युक्तं तद्भिन्नवचनं भवेत् । उपमादूषणं तत्र यत्नोद्वेगो न धीमताम् ॥' इति वृद्धैः, 'न लिङ्गवचने भिन्ने न हीनाधिक-

---

१. साहित्यदर्पणादिषु सट्टकमिति नाम दृश्यते.

तापि वा। उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥' इति दण्डिना चोक्तत्वात्, अत्र चाल्पीयस्या अपि ज्योत्स्नाया अतितृप्तिजनकत्वेन लोकोत्तरत्वस्य 'पदैकदेशरचनावर्णेष्वपि रसादयः' इति काव्यप्रकाशकृदुक्तेरेकवचनेन व्यञ्जनादुद्वेगाभावो वेदितव्यः। विदग्धप्रियेति विविधगुणालंकारगुम्फितत्वं व्यङ्ग्यम्। रीतीनां प्रतिनामग्रहणेन त्रिलोक्यप्यत्र ताः सन्तीति ध्वनितम्। तदिदं वस्तुना वस्तु व्यज्यते। काव्यकुशला इति तादृशानामेव सभ्यत्वमत्र सूचितम्। तल्लक्षणं भरते—'सभ्यास्तु विबुधैर्ज्ञेया ये दिदृक्षान्विता जनाः। मध्यस्थाः सावधानाश्च वाग्मिनो न्यायवेदिनः॥ त्रुटितात्रुटिताभिज्ञा विनयानम्रकंधराः। अगर्वा रससारज्ञास्तौर्यत्रितयकोविदाः॥ असद्वादनिषेद्धारश्चतुरा मत्सरच्छिदः। अमन्दरसनिष्यन्दिहृदया भूषणोज्ज्वलाः॥ सुवेषा भोगिनो नानाभाषाचारविशारदाः। स्वस्वोचितस्थाननिष्ठास्तत्प्रशंसापरायणाः॥' इति। चकोरोपमानेन विवेचनकर्तृत्वप्रार्थना व्यङ्ग्या। सोऽयमलंकारेण वस्तुध्वनिः। विदग्धप्रियेति षष्ठीतत्पुरुषं कृत्वा वाण्या विशेषणम्। यद्वा वैदर्भ्यादीनाम्। अस्मिन्पक्षे कर्मधारयमाश्रित्य वैदर्भ्यादीनां कामिनीरूपत्वं व्यङ्ग्यम्। सोयं वस्तुनालंकारध्वनिः। वैदर्भ्याद्या रीतयः शब्दालंकाराः। तल्लक्षणं कण्ठाभरणे—'तत्रासमासा निःशेषसमग्रगुणगुम्फिता। विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते॥ पूर्वरीतेरनिर्वाहे खण्डरीतिस्तु मागधी। समस्तपञ्चषपदामोजःकान्तिविवर्जिताम्। मधुरां सुकुमारां च पाञ्चालीं कवयो विदुः॥' इति। रीतिसामान्यलक्षणं च तत्रैव—'वैदर्भ्यादिकृतः पन्थाः काव्ये मार्ग इति स्मृतः। रीङ् गताविति धातोः सा व्युत्पत्त्या रीतिरिष्यते' ॥ इति। गौडी लाटीनामेतत्संकरजत्वात्तिसृणामेवोपादानम्। चकोरा इवेत्युपमालंकारः सा यथा—'साधर्म्यमुपमा भेदे' इति काव्यप्रकाशे। वामनेनाप्युक्तम्—'उपमानोपमेययोर्गुणलेशतः साम्यमुपमा' इति। दण्डिनाप्युक्तम्—'यथाकथंचित्सादृश्यं यत्रोद्भूतं प्रतीयते। उपमा नाम सा तस्याः प्रपञ्चोऽयं निदर्श्यते॥' इति। भइं भोदु इत्यादौ छेकानुप्रासः। कइणो इत्यादौ वृत्त्यनुप्रासः। स यथा तत्रैव—'वर्णवृत्तिरनुप्रासश्छेकवृत्तिगतो द्विधा। सोऽनेकस्य सकृत्पूर्व एकस्याप्यसकृत्परः॥' इति। इयं च वैदर्भी रीतिः। ओजःप्रसादश्लेषसमाधिमाधुर्यसौकुमार्यौदार्यार्थव्यक्तिप्रभृतिबन्धगुणानामर्थगुणानां च विद्यमानत्वात्। एतेषां विवरणं न कृतम्, ग्रन्थगौरवभयात्। एवमन्येऽपि कैशिक्यादयः शब्दालंकारा ज्ञेयाः। 'ध्वनिमत्ता तु गाम्भीर्यम्' इत्युक्तत्वाद्गाम्भीर्यादयो गुणाश्च। केचित्तु रीत्यादीनामपि गुणत्वं मन्यन्ते। अत्र च 'रतिर्देवादिविषया' इत्युक्तत्वात्सरस्वत्यादिविषया रतिरुक्ता। विदग्धप्रियेत्येतेन विदर्भदेशोत्पन्ननायिकाबोधकेन वैदर्भ्यादिशब्देन च समासोक्त्या रीतेर्नायिकात्वारोपात्, काव्यकुशलपदेन च तेषां नायकत्वारोपात्, शृङ्गारो ध्वन्यते। स्याद्यादि स्वयमूह्यम्। इदं च शार्दूलविक्रीडितम्—'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति। 'वर्णविन्यासयोगः। पद्यादौ वाद्यवक्त्रे वचसि च सकले प्राकृतादौ समोऽयम्' इत्युक्तेर्गणादिविचारः क्रियते—तत्र 'मो भूमिस्त्रिगुरुः श्रियं दिशति' इत्युक्तत्वाद्गणशुद्धिरत्रास्ति। 'सुखभयमरणक्लेशदुःखान्यवर्गः' इत्युक्तवर्णशुद्धिः। 'देवतावाचकाः शब्दा ये च भद्रा-

अवि अ।

अकलिअपरिरम्भविब्भमाइँ अजणिअचुम्बणडम्बराइँ दूरम्।
अघडिअघणताडणाइँ णिच्चं णमह अणङ्गरईणमोहणाइँ ॥ २ ॥

---

दिवाचकाः। ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि च ॥' इत्यभिधानात्। 'मगणनगणदुइमित्त होइ भगणयगणहोइ भिच। उदासीण जत दुअगणअ अवसिट्ठदुइ अरिणिच ॥' 'मित्रान्मिन्नादयः स्युर्यदि घनमुदयं शून्यकं बन्धुपीडाम्' इत्यरिसंज्ञकस्य सगणस्य मित्रसंज्ञान्मगणादुत्तरपठितस्य बन्धुपीडाप्रदत्वं न मन्तव्यम्। नान्दीलक्षणे 'शब्दतो वार्थतो वापि मनाक्काव्यार्थसूचनम्' इत्युक्तेस्तदप्युच्यते—सरस्वत्याः क्षीरनद्याः कर्पूरमञ्जर्याः। 'सरस्वती स्यात्क्षीरनद्यां नद्यन्तरे गवि' इत्यजयः। विविधं वस्त्वभिनवमा समन्तादस्यति क्षिपति दर्शयितुमिति व्यासौ भैरवानन्दः। तदीयोद्योगिनः कवयो विद्वांसः कलाकुशलाः। वरा उत्कृष्टा वाणी यस्यां सा कर्पूरमञ्जरीसदृशी कान्ता। विदर्भमगधपञ्चालदेशीयरीतिषु कं सुखं यासां ता नानाविलासिन्यः काव्याभिज्ञा रसिका इति। 'हरोत्तमाङ्गस्थितवस्तुवर्णनैः' इत्युक्तेर्ज्योत्स्नापदेन शिवशिरःस्थितचन्द्रकलास्मारणम्। भद्दमिति भद्रशब्दे 'सर्वत्र लवराम्' इति सूत्रेण रलोपे 'शेषादेशयोर्द्वित्वमनादौ' इति दस्य द्वित्वे 'अत ओ सोः' इति सोरोकारादेशे प्राप्ते 'नपुंसके सोर्बिन्दुः' इत्यनुस्वारः। एवमग्रेऽपि प्राकृतप्रक्रिया ज्ञेया। क्वचिद्विशेषं वक्ष्यामः। छइल्लवच्छोमीशब्दौ 'दाढादयो बहुलम्' इति विदग्धवैदर्भीशब्दयोः साधू। जोह्णामिति ज्योत्स्नाशब्दे 'अधो मनयाम्' इति नलोपे प्राप्ते 'ह्नष्णस्नष्णक्ष्णक्ष्मह्नः' इति स्नस्य ह्णादेशे 'उपरि लोपः' इति तलोपे 'अधामनयाम्' इति यलोपः ॥

अवि एति।

अपि च।

अकलितपरिरम्भविभ्रमाण्यजनितचुम्बनडम्बराणि दूरम्।
अगणितघनताडनानि नित्यं नमतानङ्गरत्योर्मोहनानि ॥

दूरमत्यर्थं ताडनानि चन्द्रकलोद्बोधनार्थानि 'अङ्गुष्ठे चरणे च गुल्फनिलये' इत्यादिना पञ्चसायकाद्युक्तानि। ताडनपदेन नखक्षतादीन्यप्युक्तानि। मोहनानि सुरतानि। अत्र संभोगशृङ्गार उक्तः। चुम्बनताडनपदाभ्यां तज्ज्ञानं लक्ष्यते। तेषां क्रियमाणत्वादेव। परिरम्भादिभेदास्त्वनतिप्रयोजनत्वान्न लिखिताः। अनङ्गरत्योरिति काव्यलिङ्गेन नमतेति पदयोरयं सभ्यानामतिरसिकत्वं व्यङ्ग्यम्। सुरतानामतिशयितत्वं च मोहनानीति बहुवचनेनोत्तानकरणादयः सर्वे सुरतबन्धाः सूचिताः। सत्स्वपि परिरम्भादिषु तज्ज्ञानानुत्पत्तेर्विशेषोक्तिः। सा यथा काव्यप्रकाशे—'विशेषोक्तिरखण्डेषु कारणेषु फलावचः' इति। काव्यार्थसूचनेऽनङ्गरतिरूपयोश्चन्द्रपालकर्पूरमञ्जर्योर्नायकयोर्मोहनानीति ज्ञेयम् ॥

अवि अ ।

ससिहण्डमण्डणाणं समोहणासाणँ सुरअणपिआणम् ।
गिरिसगिरिन्दसुआणं संघाडी वो सुहं देउ ॥ ३ ॥

अवि अ ।

ईसारोसप्पसादप्पणदिसु बहुसो सग्गगङ्गाजलेहिँ
आ मूलं पूरिदाए तुहिणअरअलारुप्पसिप्पीअ रुद्दो ।
जोह्णामुत्ताहलिळ्ळं णदमउलिणिहित्तग्गहत्थेहिँ दोहिँ
अग्घं सिग्घं व देन्तो जअइ गिरिसुआपाअपङ्केरुहाणम् ॥ ४ ॥

---

अवि अ । ससीति ।

शशिखण्डमण्डनयोः समोहनाशयोः सुरगणप्रिययोः ।
गिरिशगिरीन्द्रसुतयोः संघटना वः सुखं ददातु ॥

मोहने सुरते आशया सहितयोः । मोहस्य नाशेन सहितयोर्वा । जगन्मोहयतीति मोहनोऽनङ्गस्तस्याशेन व्याप्त्या सहितयोर्वा । 'अशूङ् व्याप्तौ' एतस्मादृम् । मोहनस्यासेन क्षेपेण सहितयोर्वा । शिवेन तस्य जितत्वात् । 'शषोः सः' इति सादेशे सर्वत्र सकार एव । अनेन सदा स्त्रीसंगमेऽपि कामजयित्वादन्येभ्योऽतिशयित्वाद्व्यतिरेकालंकारो व्यङ्ग्यः । 'महाहिवलया प्राप्ता चन्द्ररेखाविभूषणा' इत्यादौ देव्याश्चन्द्रचूडत्वं प्रसिद्धम् । मण्डनपदेन विरुद्धवेषस्याप्यलंकारकारित्वसूचनाद्व्यतिरेकालंकार एव व्यङ्ग्यः ॥

अवि एति ।

ईर्ष्यारोषप्रसादप्रणतिषु बहुशः स्वर्गगङ्गाजलै-
रा मूलं पूरितया तुहिनकरकलारूप्यशुक्त्या रुद्रः ।
ज्योत्स्नामुक्ताफलाढ्यं नतमौलिनिहिताभ्यामग्रहस्ताभ्यां द्वाभ्या-
मर्घ्यं शीघ्रमिव ददज्जयति गिरिसुतापादपङ्केरुहयोः ॥

बहुश ईर्ष्यारोषयोः सतोः प्रसादार्थं क्रियमाणासु प्रणतिषु नतमौलिनिःक्षिप्ताग्रहस्ताभ्यां द्वाभ्यां गिरिसुतापादकमलयोश्चन्द्रकलारूप्यशुक्त्या शीघ्रमर्घमिव ददद्रुद्रो जयतीत्यन्वयः । चन्द्रकलायाः शुक्तित्वम् । अन्योऽपि भक्तो जलपूरितया रूप्यशुक्त्या मुक्तायुक्तं प्रणामपूर्वं हस्ताभ्यामर्घं ददातीत्यर्थश्लेषः । बहुश इति तस्या मानिनीत्वं व्यङ्ग्यम् । स्वर्गगङ्गेति भावित्वमभिप्रत्युक्तम् । शीघ्रमिति मानवृद्धिभयं व्यङ्ग्यम् । देवीपादयोश्चन्द्रकलासंबन्धकरणं कदाचिदस्याश्चन्द्रस्योद्दीपकत्वान्मदनावेशेन मानभङ्ग इति शङ्कया । अत्र रूपकम्—'उपमैव तिरोभूतभेदा रूपकमिष्यते' इति तल्लक्षणात् । अर्घ्य-

(नान्द्यन्ते ।)

**सूत्रधारः**—(परिक्रम्य नेपथ्याभिमुखमवलोक्य ।) किं उण पहूपअट्टो विअ दीसदि अम्हाणं कुसीलवाणं परिजणो । जदो एक्का पत्तोचिआइं सिव-

---

मिवेत्युत्प्रेक्षा—'अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा । अन्यथोत्प्रेक्ष्यते यत्तु तामुत्प्रेक्षां विदुर्बुधाः ॥' इत्युक्तत्वात् । 'परोत्कर्षाक्षमेर्ष्या स्यादौर्जन्यान्मन्युतोऽपि वा' इति रसकलिकायामुक्तत्वान्मन्दाकिनीरूपसपत्न्यामीर्ष्या ज्ञेया गौर्याः । इयं च स्वाधीनभर्तृका । सा यथा तत्रैव—'स्वाधीनपतिका सा तु यां न मुञ्चति वल्लभः' इति । अन्योऽप्यवान्तरनायिकाभेदोऽस्या योजनीयः । 'डलादयो बहुलम्' इति शुक्तिशब्दस्य सिप्पीत्यादेशः । तदुक्तम्—'अथोत्वैदूर्यशुक्तीनां वधूभ्रमितशब्दयोः । हेहवेरिअभंसिप्पी' इति । इल्लिल्लेति 'आल्विल्लोल्लालवन्तेंता मतुपः' इति मतुप इल्लः । 'सेवादिषु वा' इति निहितेत्यत्र वा द्वित्वम् ॥

नान्द्यन्ते सूत्रधार इति कविवचनम् । एवमग्रेऽपि मध्ये मध्ये कविवचनं संस्कृतं ज्ञेयम् । नान्दीलक्षणं तु—'आशीर्नमस्क्रियारूपः श्लोकः काव्यार्थसूचकः । नान्दीति कथ्यते' इत्यादि भरते । नाट्यप्रदीपेऽपि—'नन्दन्ति काव्यानि कवीन्द्रवर्याः कुशीलवाः पारिषदाश्च सन्तः । यस्मादलं सज्जनसिन्धुहंसी तस्मादलं सा कथितेह नान्दी वा' इयं च मङ्गलार्था—'यन्नाट्यवस्तुनः पूर्वरङ्गं विघ्नोपशान्तये । कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते ॥ प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि । तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ॥' इत्युक्तत्वात् । सा चेहाष्टपदी कृता—'नाट्यपूर्वकृता नान्दी त्वाशीर्वचनसंयुता । अष्टाङ्गपदसंयुक्ता प्रशस्ता वेदसंमिता । नान्दी पदैर्द्वादशभिरष्टभिर्वाप्यलंकृता ॥' इति भरतोक्तेः । पदानि चात्र श्लोकचरणरूपाणि—'श्लोकपादं पदं केचित्सुप्तिङन्तमथापरे । परेऽवान्तरवाक्यैकस्वरूपं पदमूचिरे ॥' इति नाट्यप्रदीपेऽभिहितत्वात् । अवान्तरवाक्यपक्षे षट्पदेयं द्रष्टव्या । सा चेयं सूत्रधारप्रयोज्या—'सूत्रधारः पठेन्नान्दीं मध्यमं तालमाश्रितः ।' इति भरतोक्तेः । ईदृशीं नान्दीं पठित्वा सूत्रधारे गते पश्चात्सूत्रधारः स्थापकाख्योऽपरः प्रविशतीति शेषः । उक्तं च दशरूपके—'पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते । प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ॥' इति । भावप्रकाशेऽपि—'इत्थं रङ्गं विधायादौ सूत्रधारे विनिर्गते । तद्वन्नटः प्रविश्यान्यः सूत्रधारगुणाकृतिः ॥' इति । पूर्वरङ्गशब्दार्थस्तूक्तो वृद्धैः—'पूर्वं रज्यत इति पूर्वरङ्गो नाट्यशाला । तात्स्थ्यात्प्रथमप्रयोग इति ।' अन्यत्राप्युक्तः—'सभापतिः सभा सभ्या गायका वाचका अपि । अतो रङ्ग इति ज्ञेयः पूर्ववत्परिकल्प्यते । तस्मादयं पूर्वरङ्ग इति विद्वद्भिरुच्यते ॥' इति । सूत्रधारव्युत्पत्तिः संगीतसर्वस्वे—'नर्तनीयकथासूत्रं प्रथमं येन सूच्यते । रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते ॥' इति । लक्षणं चास्य मातृगुप्ताचार्यैरुक्तम्—'चतुरातोद्यनिष्णातोऽनेकभूषासमावृतः । नानाभाषणतत्त्वज्ञो नीतिशास्त्रार्थतत्त्ववित् ॥ वेश्योपचारचतुरः पौरुषेयविचक्षणः । तत्ताद्गीताङ्गुष्ठानेककलातालवधारणः ॥

आइं उच्चिणेदि । इअरा कुसुमावलीओ गुम्फेदि । अण्णा पडिसीसआइं पडिसारेदि । कावि क्खु वण्णिआओ पट्टए वट्टेदि । एस वंसे ठाविदो ट्ठाणो । इअं वीणा पडिसारीअदि । इमे तिण्णि मिअङ्गा सज्जीअन्ति । एस कांसतालाणं पक्खालणुज्जलाणं हल्लबोलो । एदं धुआगीदमालवीअदि । ता किंपि कुडुम्बं हक्कारिअ पुच्छिस्सम् । (नेपथ्याभिमुखमवलोक्य संज्ञापयति ।)

---

अवधार्य प्रयोक्ता च योक्तॄणामुपदेशकः । एवं गुणगणोपेतः सूत्रधारः स उच्यते ॥' इति । द्वितीयस्य स्थापकसंज्ञा दर्शिता भरते—'स्थापकः प्रविशेत्तत्र सूत्रधारगुणाकृतिः ।' इति । सूत्रधार इत्यस्याग्रे कचिद्वयङ्कोऽस्ति । सूत्रधारपदं पुनरप्युच्चारणीयमिति तस्यार्थः । तेन सूत्रधारो वदतीति द्वितीयपदस्यार्थः । एवमग्रेऽपि ज्ञेयम् । **नेपथ्याभिमुखमिति** । नेपथ्यं स्याज्जवनिका रङ्गभूमिप्रसाधनम् ।' इत्यजयः ।

**किं उणेति ।**

किं पुनर्नृत्यप्रवृत्त इव दृश्यतेऽस्माकं कुशीलवानां परिजनः ।

**जदो इति ।**

यत एका पात्रोचितानि सिचयान्युच्चिनोति । इतरा कुसुमावलीर्गुम्फति । अन्या प्रतिशीर्षकाणि प्रसारयति ।

प्रतिशीर्षकाणि नाट्यलोचने—'अमात्यकञ्चुकिश्रेष्ठिविदूषकपुरोधसाम् । वेष्टनाबद्धपट्टानि प्रतिशीर्षाणि कारयेत् ॥' इति ।

कापि खलुवर्णिकाः पट्टे वर्तयति ।

चित्रफलकानि चित्रयतीत्यर्थः ।

एष वंशे स्थापितो ध्वानः ।

वंशो वेणुवाद्यम् ।

इयं वीणा प्रतिसार्यते । इमे त्रयो मृदङ्गाः सृज्यन्ते ।

त्रैविध्यं च भरते—'मायूरी अर्धमायूरी कूर्मरथी चेति त्रिधा ।' इति ।

एष कांसतालानां प्रक्षालनोज्ज्वलानां हलहलः ।

'हल्लबोल' इति देशी ।

एतद्ध्रुवागीतमालप्यते ।

उक्तं च भरते—'प्रावेशिकी आक्षेपिणी कामिकी उत्थापिनी प्रासादिकी इति पञ्च ध्रुवाः ।' इति ।

तत्किमपि कुटुम्बमाकार्य पृच्छामि ।

**नेपथ्येति** । संज्ञापनमाह्वानसंकेतकरणम् ।

(ततः प्रविशति पारिपार्श्वकः ।)

**पारिपार्श्वकः**—आणवेदु भावो ।

**सूत्रधारः**—(विचिन्त्य ।) किं उण णट्टपअट्टा विअ दीसध ।

**पारिपार्श्वकः**—भाव, सट्टअं णच्चिदव्वम् ।

**सूत्रधारः**—को उण तस्स कई ।

**पारिपार्श्वकः**—

भाव कहिज्जदु एदं को भणई रअणिवल्लहसिहण्डो ।
रहुउलचूडामणिणो महेन्दपालस्स को अ गुरु ॥ ५ ॥

**सूत्रधारः**—(विचिन्त्य ।) पह्णोत्तरं क्खु एदम् । (प्रकाशम् ।) राअसेहरो ।

---

**तत इति** । पारिपार्श्वकलक्षणं च 'तस्यानुचरः पारिपार्श्वकः' इति साहित्यदर्पणे ।

**आणवेदु इति** ।

आज्ञापयतु भावः ।

'भाव इत्युच्यते विद्वान्' इति भावलक्षणम् ।

**सूत्रधारः**—

किं पुनर्नृत्यप्रवृत्ता इव दृश्यध्वे ।

**पारिपार्श्वकः**—

भाव, साटकं नर्तितव्यम् ।

**सट्टकमिति** । तल्लक्षणं च भावप्रकाशे—'सैव प्रवेशकेनापि विष्कम्भेण विना कृता । अङ्कस्थानीयविन्यस्तचतुर्जवनिकान्तरा ॥ प्रकृष्टप्राकृतमयीसट्टकं नामतो भवेत् ।'

**सूत्रधारः**—

कः पुनस्तस्य कविः ।

**पारिपार्श्वकः**—

भाव कथ्यतामेतत्को भण्यते रजनीवल्लभशिखण्डः ।
रघुकुलचूडामणेर्महेन्द्रपालस्य कश्च गुरुः ॥

राजशेखरकविनाम्नः पर्यायो रजनीत्यादिः ।

**सूत्रधारः**—विचिन्तनं स्वगतपर्यायः । 'अश्राव्यं स्वगतं मतम्' इति तल्लक्षणम् ।

**पह्णेति** ।

प्रश्नोत्तरं खल्वेतत् ।

मया पृष्टेऽनेनेदमुक्तं चेदत्रोत्तरमस्तीत्यर्थः ।

पारिपार्श्वकः—सो एदस्स कई।

सूत्रधारः—किं सट्टअम्।

पारिपार्श्वकः—(स्मृत्वा।) कधिदं जेव्व छइल्लेहिं।

सो सट्टओ त्ति भणई दूरं जो णाडिआइँ अणुहरइ।
किं उण एत्थ पवेअसविक्कम्भाइँ ण केवलं होन्ति॥ ६॥

सूत्रधारः—(विचिन्त्य।) ता किं त्ति सक्कअं परिहरिअ पाउअबन्धे पअट्टो कई।

पारिपार्श्वकः—सव्वभासाचउरेण तेण भणिदं जेव्व। जधा—

अत्थणिएसा ते च्चिअ सद्दा ते च्चेअ परिणमन्ताइं।
उत्तिविसेसो कव्वो भासा जा होइ सा होदु॥ ७॥

---

प्रकाशमिति। 'सर्वश्राव्यं प्रकाशं स्यात्' इति तल्लक्षणम्।

राएति।

राजशेखरः।

काका वदति—

स एतस्य कविः।

'गोत्रं नाम च बध्नीयात्' इत्युक्तेः कविनामोक्तिः।

किं साटकम्।

कधिदमिति।

कथितमेव विदग्धैः।

तत्साटकमिति भण्यते दूरं यो नाटिका अनुहरति।
किं पुनरत्र प्रवेशकविष्कम्भकौ न केवलं भवतः॥

दूरमत्यर्थम्। तल्लक्षणं सुधाकरे—'यन्नीचैः केवलं पात्रैर्भाविभूतार्थसूचनम्। अङ्कयोरुभयोर्मध्ये स विज्ञेयः प्रवेशकः॥' इति। 'तत्र विष्कम्भको भूतभाविवस्त्वंशसूचकः। अमुख्यपात्ररचितः संक्षेपैकप्रयोजनः॥' तद्भेदा अपि तत्रैव—'द्विधा स शुद्धो मिश्रश्च मिश्रः स्यान्नीचमध्यमैः। शुद्धः केवलमध्योऽयमेकानेककृतो द्विधा॥'

ता किमिति।

तत्किमिति संस्कृतं परिहृत्य प्राकृतबन्धे प्रवृत्तः कविः।

पारिपार्श्वकः—

सर्वभाषाचतुरेण तेन भणितमेव। यथा—

अवि अ ।

परुसा सक्कअबन्धा पाउअबन्धो वि होइ सुउमारो ।
पुरुसमहिलाणँ जेत्तिअमिहन्तरं तेत्तिअमिमाणम् ॥ ८ ॥

सूत्रधारः—ता अप्पा किं ण वण्णिदो तेण ।

पारिपार्श्वकः—सुणु । वण्णिदो जेव तक्कालकइणं मज्झम्मि मिअङ्कलेहाकहाआरेण अवराइएण । जधा—

बालकई कइराओ णिब्भअराअस्स तह उवज्झाओ ।
इअ जस्स परम्परए अप्पा माहप्पमारूढो ॥ ९ ॥

---

अर्थनिवेशास्त एव शब्दास्त एव परिणमन्तोऽपि ।
उक्तिविशेषः काव्यं भाषा या भवति सा भवतु ॥

परिणमन्तोऽपीत्यनेन प्राकृतस्य संस्कृतयोनित्वमुक्तम् । तदुक्तं प्राकृतसंजीविन्याम्—'प्राकृतस्य तु सर्वमेव संस्कृतं योनिः' इति । दण्डिना चोक्तम्—'तद्भवस्तत्समो देशीत्यनेकः प्राकृतक्रमः ।' इति । उक्तिविशेष इति 'तददोषौ शब्दार्थौ' इत्यादिना काव्यप्रकाशे नानाभेदभिन्नं काव्यमुपक्षिप्तम् । भाषाविशेषानादरश्चोक्तः । कण्ठाभरणे—'संस्कृतेनैव कोऽप्यर्थः प्राकृतेनैव चापरः ।' इत्यादिना 'सर्वाभिरपि कश्चन' इत्यन्तेन ।

अवि पति ।

अपि च ।

परुषाः संस्कृतगुम्फाः प्राकृतगुम्फोऽपि भवति सुकुमारः ।
पुरुषमहिलानां यावदिहान्तरं तेषु तावत् ॥

महिलाः कामिन्यः ।

सूत्रधारः—

तदात्मा किं न वर्णितस्तेन ।

पारिपार्श्वकः—

शृणु । वर्णित एव तत्कालकवीनां मध्ये मृगाङ्कलेखाकथाकारेणापराजितेन । यथा—

बालकविः कविराजो निर्भयराजस्य तथोपाध्यायः ।
इत्येतस्य परम्परया आत्मा माहात्म्यमारूढः ॥

यदा तु 'इति यस्य जयैः परम्परामाहात्म्यमारूढम्' इति पाठस्तदा जयैरुत्कर्षैः । आरूढमिति भावे क्तः । इयं च कारणमाला । सा यथा—'यथोत्तरं चेत्पूर्वस्य पूर्वस्यार्थस्य

सो अस्स कई सिरिराअसेहरो तिहुअणं पि धवलेन्ति ।
हरिणङ्कपालिसिद्धिए णिकलङ्का गुणा जस्स ॥ १० ॥

सूत्रधारः—ता केण समादिट्ठा पउञ्जध ।

पारिपार्श्वकः—

चाउहाणकुलमौलिमालिआ राअसेहरकइन्दगेहिणी ।
भत्तुणो किदिमवन्तिसुन्दरी सा पउञ्जइदुमेदमिच्छदि ॥ ११ ॥

किं च ।

चन्दपालधरणीहरिणङ्को चक्कवट्टिपअलाहणिमित्तम् ।
एत्थ सट्टअवरे रससोत्ते कुन्तलाहिवसुदं परिणेदि ॥ १२ ॥

---

हेतुता । तदा कारणमाला स्यात्' इति । परिकरोऽप्यत्र । स यथा—'विशेषणैर्यत्साकूतैरुक्तः परिकरस्तु सः' इति । द्वितीयपाठे आरोहणस्य चेतनधर्मस्य जयेष्वारोपणादुत्तरोत्तरप्रसारित्वलक्षणया परमकाष्ठापन्नत्वं व्यङ्ग्यम् ।

सो इति ।

स एतस्य कविः श्रीराजशेखरस्त्रिभुवनमपि धवलयन्ति ।
हरिणाङ्कप्रति(पङ्क्ति)सिद्ध्या निष्कलङ्का गुणा यस्य ॥

प्रतिकूलतया सिद्धिस्तत्कार्यकारित्वम् । त्रिभुवनमिति निष्कलङ्का इति च व्यतिरेकः । 'उपमानाद्यदन्यस्य व्यतिरेकः स एव सः ।' इति काव्यप्रकाशे । अन्यस्य व्यतिरेको विशेषेणातिरेक आधिक्यं व्यतिरेक इत्यर्थः । 'विस्तरादुत संक्षेपाद्विदधीत प्ररोचनाम्' इत्युक्तत्वात् 'प्रशंसा तु द्विधा ज्ञेया चेतनाचेतनाश्रया । चेतनास्तु कथानाथकविसभ्यनटाः स्मृताः ॥ अचेतनौ देशकालौ कालो मधुशरन्मुखः ॥' इत्युक्तेश्च कविप्रशंसा कृता । नटप्रशंसा किं पुनरित्यादिना सूचिता ।

सूत्रधारः—

तत्केन समादिष्टाः प्रयुङ्ग्ध्वम् ।

पारिपार्श्वकः—

चाहुवानकुलमौलिमालिका राजशेखरकवीन्द्रगेहिनी ।
भर्तुः कृतिमवन्तिसुन्दरी सा प्रयोजयितुमेतदिच्छति ॥

कवेर्भार्या प्रयोजिका ।

किं चेति ।

चण्डपालधरणीहरिणाङ्कश्चक्रवर्तिपदलाभनिमित्तम् ।
अत्र साटकवरे रसस्रोतसि कुन्तलाधिपसुतां परिणयति ॥

ता भाव, एहि । अणन्तरकरणिज्जं संपादेह्म । जदो महाराअदेईणं भूमिअं घेत्तूण अज्जो अज्जघडिणिआ अ जवणिअन्तरे वट्टदि ।

(इति परिक्रम्य निष्क्रान्तौ ।)

प्रस्तावना ।

---

(ततः प्रविशति राजा देवी विदूषको विभवतश्च परिवारः । सर्वे परिक्रम्य यथोचितमुपविशन्ति ।)

राजा—देवि दक्खिणावहणरिन्दणन्दिणि, वड्ढावीअसि इमिणा वसन्तारम्भेण । जदो

> बिम्बोट्ठे बहलं ण देन्ति मअणं णो गन्धतेल्लाविला
> 　वेणीओ विरअन्ति देन्ति ण तहा अङ्गम्मि कुप्पासअम् ।
> जं बाला मुहकुङ्कुमम्मि वि घणे वट्टन्ति ढिल्लाअरा
> 　तं मण्णे सिसिरं विणिज्जिअ बला पत्तो वसन्तूसओ ॥ १२ ॥

---

रसाः शृङ्गारादयो जलं च । स्रोतः प्रवाहः । साटकलक्षणं त्वभ्यधायि । अत्र रूपकश्लेषानुप्रासाः । अनेन तथा नायकप्रशंसा साटकस्वरूपप्रशंसा च कृता । उक्तं हि—'वाथाकलापः प्रथमं कलाविधिरनन्तरः । वाथाशून्या न दृश्यन्ते व्यवहाराः कथंचन ॥ वाथाकलापस्तु कवेरसीष्टार्थप्रकाशनम् ।' इति ।

ता इति ।

तद्भाव, एहि । अनन्तरकरणीयं संपादयावः । यतो महाराजदेव्योर्भूमिकां गृहीत्वा आर्य आर्यभार्या च जवनिकान्तरे वर्तते ।

तत इति । 'एषामन्यतमेनार्थं पात्रावाक्षिप्य सूत्रभृत् । प्रस्तावनान्ते निर्गच्छेत्ततो वस्तु प्रपञ्चयेत् ॥' इति दशरूपके उक्तत्वात् । 'गूढमन्त्रः शुचिर्वाग्मी भक्तो नर्मविचक्षणः । स्यान्नर्मसचिवस्तस्य कुपितस्त्रीप्रसादकः ॥' इत्युक्त्वा 'पीठमर्दो विटश्चैव विदूषक इति त्रिधा ।' इति तद्भेदांश्चोक्त्वा 'क्रीडाप्रायो विदूषकः । स्ववपुर्वेषभाषाभिर्हास्यकारी स्वकर्मकृत् ।' इति विदूषकलक्षणमभिहितं शृङ्गारतिलके ।

राजेति ।

देवि दक्षिणापथनरेन्द्रनन्दिनि, वर्धसेऽनेन वसन्तारम्भेण ।

जदो इति ।

यतः ।

> बिम्बोष्ठे बहलं न ददति मदनं नो गन्धतैलाविला
> 　वेणीर्विरचयन्ति ददति न तथाङ्गेऽपि कूर्पासकम् ।

देवी—देव, अहं वि तुज्झ पडिवड्ढाविआ भविस्सम् । जधा—

छोल्लन्ति दन्तरअणाइँ गदे तुसारे
ईसीसि चन्दणरसम्मि मणः कुणन्ति ।
एह्णिं सुवन्ति घरमज्झमसालिआसु
पाअन्तपुञ्जिअपडं मिहुणाइँ पेच्छ ॥ १४ ॥

---

यद्बाला मुखकुङ्कुमेऽपि घने वर्तन्ते शिथिलादरा-
स्तन्मन्ये शिशिरं विनिर्जित्य बलात्प्राप्तो वसन्तोत्सवः ॥

कूर्पासकं चोलिका । 'बाला स्यात्षोडशाब्दा' इति बालालक्षणम् । अनेन तासां विलासवत्त्वं व्यङ्ग्यम् । बाला इत्यस्यावृत्तेरर्थदीपकम् । 'अनेकशब्दोपादानात्क्रियैवैकात्र दीप्यते ।' इति दण्डिनोक्तम् । अत्र च देन्ति देन्ति इति कथितपदत्वं काव्यदोषो न शङ्कनीयः । विरअन्तीत्येतेन च्छेकानुप्रासनिर्वाहकत्वेन गुणत्वात् । तल्लक्षणं च 'सोऽनेकस्य सकृत्पूर्वः' इति काव्यप्रकाशे । अस्यार्थः—अनेकस्य व्यञ्जनस्य सकृदेकवारं साम्यं पूर्वं यस्य स च्छेकानुप्रास इति । न चाव्यवधानेन पूर्वतायामेव स इति वाच्यम् । 'ततोऽरुणपरिसन्दमन्दीकृतवपुः शशी । दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम् ॥' इत्यादावप्यकारमकाराकाराकारपकाराकारव्यवधानेन तदनुदाहरणत्वापातात् । यद्वैकस्य देन्तिपदस्य दानविशेषार्थान्तरसंक्रामितवाच्यत्वाददोष इति युक्तमुत्पश्यामः ।

देवी—

देव, अहमपि तव प्रतिवर्धिका भविष्यामि ।

प्रतिवर्धयतीति प्रतिवर्धिका । वसन्तवर्णिकेत्यर्थः ।

जधेति ।

यथा—

स्फुरन्ति दन्तरत्नानि गते तुषारे
ईषदीषच्चन्दनरसे मनः कुर्वन्ति ।
इदानीं स्वपन्ति गृहमध्यमशालिकासु
पादान्तपुञ्जितपटं मिथुनानि प्रेक्षस्व ॥

मध्यमशालिकास्वित्यनेनान्तर्गृहस्वापस्त्यक्त इत्युक्तम् । पादान्तेत्यादिना प्रच्छादनापेक्षोक्ता । स्फुरन्तीत्यनेनोष्ठानां हासासहत्वमुक्तम् । यथा शृङ्गारतिलके—'किंचिद्विकसितैर्गण्डैः किंचिद्विस्फुरितेक्षणैः । किंचिल्लक्ष्यद्विजैः सोऽयमुत्तमानां भवेद्धसः ॥' इति । मिथुनानीति विरहासहत्वं व्यङ्ग्यम् ।

(नेपथ्ये ।)

**वैतालिकः**—जअ पुव्वदिअङ्गणाभुअङ्ग चम्पाचम्पककण्णऊर लीलाणिज्जिअराढादेस विक्कमक्कन्तकामरूअ हरिकेलीकेलिआरअ अवमाणिअजच्चसुवण्णवण्ण सव्वङ्गसुन्दरत्तणरमणिज्ज, सुहाअ दे होदु सुरहिसमारम्भो। इह हि

पण्डीणं गण्डवालीपुलअणचवला कञ्चिबालावलीणं
 माणं दो हण्डअन्ता रइरहसकला लोलचोलप्पिआणम्।
कण्णाडीणं कुणन्ता चिउरतरलणं कुन्तलीणं पिएसुं
 गुम्फन्ता णेहगण्ठि मलअसिहरिणो सीअला वान्ति वाआ ॥१५॥

---

**जयेति।**

जय पूर्वदिगङ्गनाभुजङ्ग चम्पाचम्पककर्णपूर लीलानिर्जितराढादेश विक्रमाक्रान्तकामरूप हरिकेलीकेलिकारक अपमानितजात्यसुवर्णवर्ण सर्वाङ्गसुन्दरत्वरमणीय, सुखाय ते भवतु सुरभिसमारम्भः।

भुजंगः कामुकः। 'राढागाढत्व' 'चङ्गत्व' इति वा पाठः। 'अवमानितकर्णसुवर्णदान' इति वा पाठः। राज्ञः सर्वाः संबुद्धयः। चम्पाराढाकामरूपहरिकेल्याख्या देशाः। कामस्य रूपमिति न व्याख्या। प्रक्रमभङ्गापत्तेः। चङ्गत्वं नानाकलाकौशलत्वम्। आद्ययोः संबुद्ध्यो रूपकम्। हरिकेली कामिनीवेत्यर्थश्लेषः। सुरभिर्वसन्तः।

इह हि

पाण्डीनां गण्डपालीपुलकनचपलाः काञ्चीबालावलीनां
 मानं द्विः खण्डयन्तो रतिरभसकरा लोलचोलाङ्गनानाम्।
कार्णाटीनां कुर्वन्तो कुन्तलतरलनं कुन्तलीनां प्रियेषु
 गुम्फन्तः स्नेहग्रन्थिं मलयशिखरिणः शीतला वान्ति वाताः ॥

पाण्ड्यादयस्तत्तद्देशोद्भवाः स्त्रियः। पुलकनं पुलककरणम्। तरलनं तरलत्वकरणम्। एतेन कामोद्दीपकत्वमुक्तं दाक्षिणात्यवायूनाम्। एतेन तत्तद्देशाधिपत्यं राज्ञो व्यङ्ग्यम्। अन्यथा विपक्षदेशवर्णनं रोषावहत्वादनौचितीमेव व्रजेत्। णेहेति 'स्नेहेति वा' इत्यनेन विप्रकर्षाभावपक्षे 'उपरि लोपः' इत्यनेन सलोपः। लक्ष्यवशाल्लक्षणप्रवृत्तेरङ्गीकारात्, परमपि 'अधोमनयाम्' इति प्राप्तं नलोपं बाधित्वा 'ज्ञस्नकण्ष्णनां णः' इति णादेशः। 'द्वेर्दो' इति द्विशब्दस्य दोआदेशः। अत्र कारकहेत्वलंकारः। 'हेतुश्च सूक्ष्मलेशौ च वाचामुत्तमभूषणम्। कारकज्ञापकौ हेतू तौ चानेकविधौ यथा॥' इति दण्डिनोक्तत्वात्।

(अत्रैव ।)

**द्वितीयः—**

जादं कुङ्कुमपङ्कलीढमरठीगण्डप्पहं चम्पअं
थोआवट्टिअदुद्धमुद्धकलिआ पप्फुल्लिआ मल्लिआ ।
मूले सामलमग्गलग्गभसलं लक्खिज्जए किंसुअं
पिज्जन्तं भसलेहिँ दोहिँ वि दिसाभाएसु लग्गेहिँ व ॥ १६ ॥

**राजा—**पिए विब्भमलेहए, एक्को अहं वद्धावओ तुज्झ, एक्का तुमं वद्धाविआ मज्झ । किं उण दुवे वि अम्हे वद्धाविआ कञ्चणचण्डरअणचण्डेहिं बन्दीहिं । ता विब्भममरट्टपअट्टाविअं तरुणीणम्, णट्टावअं मलअमारुदन्दोलिदलदाणच्चणीणम्, चारुपवञ्चितपञ्चमं कलअण्ठिकण्ठकन्दलेसु, कन्दलिअकन्दप्पकोअण्डदण्डखण्डिदचण्डिमम्, सिणिद्धबन्धुं वसुंधरापुरंधीए । विसारिअ पसइप्पमाणे अच्छिणी महुच्छवं जहिच्छं पेच्छदु देवी ।

---

**जादमिति ।**

जातं कुङ्कुमपङ्कलीढमहाराष्ट्रीगण्डप्रभं चम्पकं
स्तोकावर्तितदुग्धमुग्धकलिका प्रोत्फुल्ला मल्लिका ।
मूले श्यामलमग्रलग्नभ्रमरं लक्ष्यते किंशुकं
पीयमानं मधुपाभ्यां द्वाभ्यामपि दिशाभागेषु लग्नाभ्यामिव ॥

मरठीति दंष्ट्रादिः । थो इति 'स्तस्य थः' इति थः । स्तोकपदमत्यन्तसादृश्यार्थम् । मुग्धा सुन्दरी । 'मुग्धः सुन्दरमूढयोः' इत्यभिधानात् । महाराष्ट्रीपदं गौरत्वातिशयकथनार्थम् । स्वभावतस्तद्गण्डानां गौरत्वात् । भसलो भ्रमरः । अत्र रूपकस्वभावोक्त्युत्प्रेक्षाः । स्वभावोक्तिर्दण्डिनोक्ता—'नानावस्थं पदार्थानां रूपं साक्षाद्विवृण्वती । स्वभावोक्तिश्च जातिश्चेत्याद्या सालंकृतिर्यथा ॥' इति ।

**राजा—**

प्रिये विभ्रमलेखे, एकोऽहं वर्धापकस्तव, एका त्वं वर्धापिका मम । किं पुनर्द्वावप्यावां वर्धापितौ काञ्चनचण्डरत्नचण्डाभ्यां बन्दिभ्याम् । तद्विभ्रमगर्वप्रवर्तकं तरुणीनाम्, नर्तकं मलयमारुतान्दोलितलतानर्तकीनाम्, चारुप्रपञ्चितपञ्चमं कलकण्ठीकण्ठकन्दलेषु, कन्दलितकंदर्पकोदण्डदण्डखण्डितचण्डिमानम्, स्निग्धबान्धवं वसुंधरापुरंध्र्याः । विस्तार्य प्रसृतिप्रमाणे अक्षिणी मधूत्सवं यथेच्छं प्रेक्षतां देवी ।

देवी—जधा किल णिवेदिदं बन्दीहिं । पअट्टा ज्जेव मलआणिला । तधाहि ।

लङ्कातोरणमालिआतरलिणो कुम्भुब्भवस्सासमे
मन्दन्दोलिदचन्दणद्दुमलदाकप्पूरसंपक्किणो ।
कङ्कोलीकुलकम्पिणो फणिलदाणिप्पट्टणट्टावआ
चण्डं चुम्बिअतम्बवण्णिसलिला वाअन्ति चित्ताणिला ॥ १७ ॥

---

वर्धापनं वर्णनम् । विभ्रमेत्यादि मधूत्सवविशेषणानि । तरट्टीति दंष्ट्रादित्वात् । णट्टावअमिति वयोऽनुसारेण । तारुण्यं हि विभ्रमनिदानम् । अथवा यथायं कामिनीनां विभ्रमजनकस्तथा वसन्तोत्सवोऽपि । कामुकान्हि विलोक्य कामिन्यो विभ्रमसमुद्गमा भवन्ति । अर्थत उपमानम् । तेन विभक्तित्वं न दोषः । एतेन स्वस्य कामुकता व्यङ्ग्या । 'क्रोधः स्मितं च कुसुमाभरणादियाच्ञा तद्वर्जनं च सहसैव विमण्डनं च । आक्षिप्य कान्तवचनं लपनं सखीभिर्निष्कारणस्थितगतेन स विभ्रमः स्यात् ॥' इति विभ्रमलक्षणम् । 'तल्लास्यं ताण्डवं चैव छलितं शम्बया सह । हल्लीसकं च रासं च षट्प्रकारं प्रचक्षते ॥' इति षड्भेदमपि नृत्यं गृह्यते । पञ्चमः स्वरः । कलकण्ठी कोकिला । चार्वित्यादौ विशेषणद्वयं बहुव्रीहिः । विस्तार्येत्यादिना विस्फारिताख्यो दृग्विकार उक्तः । तदुक्तम्—'आयतं विस्फुरत्तारं विस्फारितमुदाहृतम् ।' इति । एतेनादरातिशयो व्यङ्ग्यः । अत्र हेतुरूपके । नर्तकमित्यादौ समाधिः । 'अन्यधर्मस्ततोऽन्यत्र लोकसीमानुरोधिना । सम्यगाधीयते यत्र स समाधिः स्मृतो यथा ॥' इति दण्डी ।

देवि—

यथा किल निवेदितं बन्दिभ्याम् ।

सत्यमेवोक्तमित्यर्थः ।

प्रवृत्ता एव मलयानिलाः । तथाहि ।

लङ्कातोरणमालिकातरलिनः कुम्भोद्भवस्याश्रमे
मन्दान्दोलितचन्दनद्रुमलताकर्पूरसंपर्किणः ।
कङ्कोलीकुलकम्पिनः फणिलतानिष्पष्टनर्तका-
श्चण्डं चुम्बितताम्रपर्णीसलिला वान्ति चैत्रानिलाः ॥

कङ्कोली वृक्षविशेषः । फणिलताः फणिरूपा लताः । लताविशेषा (ताम्बूलवल्लयः)वा । निष्पष्टं निःशेषं नितरां वा । महाराष्ट्रभाषायाम् 'निप्पट' इति प्रसिद्धम् । एतेन मान्द्यादिकमुक्तं वायोः । अत्र प्रसादमाधुर्यसौकुमार्यार्थव्यक्तय उक्ताः । ते यथा कण्ठाभरणे— 'प्रसिद्धार्थपदत्वं यत्स प्रसादोऽभिधीयते । या पृथक्पदता वाक्ये तन्माधुर्यमिति स्मृतम् ॥

अवि अ।

माणं मुञ्चध देह वल्लहजणे दिट्ठिं तरङ्गुत्तरं
तारुण्णं दिअहाइँ पञ्च दह वा पीणत्थणत्थम्भणम्।
इत्थं कोइलमञ्जुसिञ्जणमिसादेअस्स पञ्चेसुणो
दिण्णा चित्तमहूसवेण भुअणे आण्णे व सव्वंकसा॥ १८

विदूषकः—भो, तुह्माणं सव्वाणं मज्झे अहमेक्को कालक्खरिओ। जस्स मे ससुरस्स ससुरो पण्डिअघरे पुत्थिआइं वहन्तो आसी।

चेटी—(विहस्य।) तदो आगदं दे अण्णएण पण्डित्तणम्।

विदूषकः—(सक्रोधम्।) आः दासीए धीए भविस्सकुट्टणि णिल्लक्खणे अविअक्खणे, ईरिसो हं मुक्खो जो तुए वि उअहसिज्जामि।

---

अनिष्ठुराक्षरप्रायं सुकुमारमिति स्मृतम्। यत्र संपूर्णवाक्यत्वमर्थव्यक्तिं वदन्ति ताम्॥' इति। एवमन्येऽपि गुणा द्रष्टव्याः। अत्रानुप्राससमाध्यर्थश्लेषाः।

अपि च।

मानं मुञ्चत ददत वल्लभजने दृष्टिं तरङ्गोत्तरां
तारुण्यं दिवसानि पञ्च दश वा पीनस्तनस्तम्भनम्।
इत्थं कोकिलमञ्जुशिञ्जनमिषाद्देवस्य पञ्चेषो-
र्दत्ता चैत्रमहोत्सवेन भुवने आज्ञेव सर्वंकषा॥

मानलक्षणं शृङ्गारतिलके—'स मानो नायिका यस्मिन्नीर्ष्यया नायकं प्रति। धत्ते विकारमन्यस्त्रीसङ्गदोषवशात्तथा॥' इति। तरङ्गितेति तदाख्यो दृग्विकार उक्तः। कल्लोला इव यत्कान्तिविच्छेदैस्तत्तरङ्गितम्।' इति तल्लक्षणम्। चैत्रे मधूत्सवश्चैत्रमधूत्सवः। सर्वंकषेति तत्र कामुकरहितत्वं व्यङ्ग्यम्। अत्र विप्रलम्भशृङ्गारः। कोकिलरवादयो विभावाः। दृग्विकारादयोऽनुभावा द्रष्टव्याः। निर्वेदादयो व्यभिचारिणश्च।

विदूषकः—

भोः, युष्माकं सर्वेषां मध्येऽहमेकः कालाक्षरिकः। यस्य मे श्वशुरस्य श्वशुरः पण्डितगृहे पुस्तकानि वहन्नासीत्।

कालाक्षराणि वेत्तीति कालाक्षरिकः पण्डितः।

चेटी—

तत आगतं ते अन्वयेन पाण्डित्यम्।

वंशक्रमागतमित्यर्थः।

अण्णं च हे परपुत्तविट्टालिणि रच्छालोट्टणि भमरटेण्टे टेण्टाकराले कोससहापहारिणि दुट्ठसंघडिदे, अहवा हत्थकङ्कणं किं दप्पणेण पेक्खीअदि ।

विचक्खणा—(विभाव्य ।) एवं णेदम् । तुरङ्गस्स सिग्घत्तणे किं साक्खिणो पुच्छीअन्ति । ता वण्णअ वसन्तअम् ।

विदूषकः—तुमं उण पञ्जरगदा सारिअ व कुरुकुराअन्ती चिट्ठसि, ण किं पि जाणेसि । ता पिअवअस्सस्स देवीए अ पुरदो पढिस्सम् । जदो ण कत्थूरिआ कुग्गामे वणे वा विक्किणीअदि, णं सुवण्णं कसवट्टिअं विणा सिलापट्टए कसीअदि ।

राजा—पिअवअस्स, ता पढ । सुणीअदु ।

---

विदूषकः—

आः दास्याः पुत्रि भविष्यत्कुट्टनि निर्लक्षणे अविचक्षणे, ईदृशोऽहं मूर्खो यस्त्वयाप्युपहस्ये ।

प्राकृत आत्मनेपदपरस्मैपदव्यत्ययः । भीए इति दंष्ट्रादिः ।

अन्यच्च हे परपुत्रविट्टालिनि रथ्यालुण्ठिनि भ्रमरटेण्टे टेण्टाकराले कोषशतापहारिणि दुष्टसंघटिते, अथवा हस्तकङ्कणं किं दर्पणेन दृश्यते ।

इदानीमेव मया कवित्वं कर्तव्यमित्यर्थः । विट्टालिनी भ्रंशिका । परपुरुषलम्पटेत्यर्थः । भ्रमरटेण्टा कुचेष्टावती । टेण्टाकराला व्यर्थप्रलापिनी । एते देशीशब्दाः कोषाः शपथास्तेषां शतेन वर्तनशीला । मिथ्याशपथकारिणीत्यर्थः ।

विचक्षणा—

एवमेतत् । तुरंगस्य शीघ्रत्वे किं साक्षिणः पृच्छयन्ते । तद्वर्णय वसन्तम् ।

विदूषकः—

त्वं पुनः पञ्जरगता शारिकेव कुरुकुरायमाणा तिष्ठसि, न किमपि जानासि । तत्प्रियवयस्यस्य देव्याश्च पुरतः पठिष्यामि । यतो न कस्तूरिका कुग्रामे वने वा विक्रीयते, न सुवर्णं कषपट्टिकां विना शिलापट्टके कष्यते ।

ईदृशकवित्वाश्रयणायोग्याया अज्ञायास्तव सविधे न पठिष्यामीति भावः ।

राजा—

प्रियवयस्य, तत्पठ । श्रूयताम् ।

अस्माभिरिति शेषः ।

(विदूषकः पठति।)

फुल्लुक्करं कलमकूरसमं वहन्ति
जे सिन्दुवारविडवा मह वल्लमा दे।
जे गालिअस्स महिसीदहिणो सरिच्छा
ते किं च मुद्धविअइल्लपसूणपुञ्जा ॥ १९ ॥

**विचक्षणा**—णिअकन्तारञ्जणजोग्गं दे वअणम्।

**विदूषकः**—ता उआरवअणे, तुमं पढ।

**देवी**—(किंचिद्विहस्य।) सहि विअक्खणे, अह्माणं पुरदो तुमं गाढं कइत्तणेण उत्ताणा होसि। ता पढ संपदं अज्जउत्तस्स पुरदो सअं कदं किंपि कव्वम्। जदो तं कव्वं जं सहाए पढीअदि, तं सुवण्णं जं कसवट्टए णिवट्टेदि, सा घरिणी जा पिअं रञ्जेदि, सो पुत्तो जो कुलं उज्जलेदि।

---

**फुल्लेति।**

पुष्पोत्करं कलमकूरसमं वहन्ति
ये सिन्दुवारविटपा मम वल्लभास्ते।
ये गालितस्य महिषीदध्नः सदृक्षा-
स्ते किं च मुग्धविचकिलप्रसूनपुञ्जाः॥

कूर ओदनः। विचकिलास्तरुभेदाः। मम वल्लभा इत्यनेन स्वस्य कामकलाकुशलत्वं व्यञ्जयम्।

**विचक्षणा**—

निजकान्तारञ्जनयोग्यं ते वचनम्।

स्वबुद्धिमेव केवलमाश्रित्य रञ्जयसीति भावः।

**विदूषकः**—

तदुदारवचने, त्वं पठ।

**देवी**—

सखि विचक्षणे, अस्माकं पुरतस्त्वं गाढं कवित्वेनोत्ताना भवसि।

अतिगर्वोद्यता इति भावः।

तत्पठ सांप्रतमार्यपुत्रस्य पुरतः स्वयं कृतं किमपि काव्यम्। यतस्तत्काव्यं यत्सभायां पठ्यते, तत्सुवर्णं यत्कषपट्टिकायां निवर्तते, सा गृहिणी या पतिं रञ्जयति, स पुत्रो यः कुलमुज्ज्वलयति।

'सर्वस्त्रीभिः पतिर्वाच्य आर्यपुत्रेति यौवने' इत्युक्तेरार्यपुत्रस्येत्युक्तम्।

**विचक्षणा**—जं देवी आणवेदि । (पठति ।)

जे लङ्कागिरिमेहलाहिँ खलिदा संभोअखिण्णोरई-
फारप्फुल्लफणावलीकवलणे पत्ता दरिद्दत्तणम् ।
ते एह्णिं मलआणिआ विरहिणीणीसाससंपक्किणो
जादा झत्ति सिसुत्तणे वि बहला तारुण्णपुण्णा विअ ॥ २० ॥

**राजा**—सच्चं विअक्खणा विअक्खणा चदुरत्तणेण उत्तीणम् । ता किं अण्णम् । कइणं वि कई ।

**देवी**—(विहस्य ।) कइचूडामणित्तणेण ट्ठिदा एसा ।

**विदूषकः**—(सक्रोधम् ।) ता उज्जुअं ज्जेव किं ण भणीअदि देवीए, अच्चुत्तमा विअक्खणा कव्वम्मि, अच्चहमो कविञ्जलबह्मणो त्ति ।

---

**विचक्षणा**—
यद्देव्याज्ञापयति ।
**जे इति ।**

ये लङ्कागिरिमेखलायां स्खलिताः संभोगखिन्नोरगी-
स्फारोत्फुल्लफणावलीकवलने प्राप्ता दरिद्रत्वम् ।
त इदानीं मलयानिला विरहिणीनिःश्वाससंपर्किणो
जाता झटिति शिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव ॥

अयं श्लोकः कविनिबद्धवक्तृप्रौढोक्तिनिर्मिते ध्वनौ निःश्वाससंपर्कित्वेन वस्तुना प्राप्तैश्वर्याः किं किं न कुर्वत इति वस्तु व्यज्यत इत्युदाहरणविषयत्वेनोदाहृतः काव्यप्रकाशे [चतुर्थोल्लासे] । तस्या अत्युत्प्रेक्षाया व्यञ्जनेऽकिंचित्करत्वाच्चालंकारव्यञ्जनोदाहरणम् । अत्र हेतूत्प्रेक्षासमाधिविभावनाः । विभावना दण्डिनोक्ता—'प्रसिद्धहेतुव्यावृत्त्या यत्किंचित्कारणान्तरम् । यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना ॥' इति ।

**राजा**—
सत्यं विचक्षणा विचक्षणा चतुरत्वेनोक्तीनाम् । तत्किमन्यत् । कवीनामपि कविः ।

**देवी**—
कविचूडामणित्वेन स्थितैषा ।

**विदूषकः**—
तदृज्वेव किं न भण्यते देव्या, अत्युत्तमा विचक्षणा काव्ये, अत्यधमः कपिञ्जलब्राह्मण इति ।

**विचक्षणा**—अज्ज, मा कुप्प । कव्वं जेव कइत्तणं पिसुणेइ । जदो णिअकन्तारञ्जणजोग्गं णिओदरम्भरित्तणम् । णिन्दणिज्जे वि अत्थे सुउमारा दे वाणी, लम्बत्थणीए विअ एकावली, तुन्दिलाए विअ कञ्चुलिआ, ठेराए विअ कडक्खविक्खेवो, कट्टिदकेसाए विअ मालदीकुसुममाला, काणाए विअ कज्जलसलाआ, ण सुट्ठुदरं भादि रमणिज्जा ।

**विदूषकः**—तुज्झ उण रमणिज्जे वि अत्थे ण सुन्दरा सद्दावली । कणअकडिसुत्तए विअ लोहकिङ्किणीमाला, पडिवट्टे विअ टसरविरअणा, गोरङ्गीए विअ चन्दणचच्चा, ण चारुत्तणमवलम्बेदि । तहा वि तुमं वण्णीअसि ।

**विचक्षणा**—अज्ज, मा कुप्प । का तुम्हेहिं सह पडिसद्धा । जदो तुमं णाराओ विअ णिरक्खरो वि रअणतुलाए णिउज्जीअसि । अहं उण तुले व लद्धक्खरा वि ण सुवण्णलवे विणिउज्जीआमि ।

---

**विचक्षणा**—

आर्य, मा कुप्य । काव्यमेव कवित्वं पिशुनयति । यतो निजकान्तारञ्जनयोग्यं निजोदरंभरित्वम् । निन्दनीयेऽप्यर्थे सुकुमारा ते वाणी, लम्बस्तन्या इवैकावली, तुन्दिलाया इव कञ्चुलिका, स्थविराया इव कटाक्षविक्षेपः, कर्तितकेशाया इव मालतीकुसुममाला, काणाया इव कज्जलशलाका, न सुष्ठुतरं भाति रमणीया ।

ते वाणी न भातीत्यर्थः ।

**विदूषकः**—

तव पुना रमणीयेऽप्यर्थे न सुन्दरा शब्दावली । कनककटिसूत्र इव लोहकिंकिणीमाला, प्रतिपट्ट इव त्रसरविरचना, गौराङ्ग्या इव चन्दनचर्चा, न चारुत्वमवलम्बते । तथापि त्वं वर्ण्यसे ।

प्रतिपट्टः पट्टसूत्रम् । चन्दनचर्चायाः स्वतः सुन्दरत्वेऽपि गौरेऽङ्गे परभागालाभादसौन्दर्यम् । अर्थासुन्दरत्वेऽपि काव्यकौशलादहं सुकविः, त्वं त्वर्थसौन्दर्येऽप्यसुन्दरकवित्वे वर्ण्यसे च सर्वैरिति महदाश्चर्यमिति भावः ।

**विचक्षणा**—

आर्य, मा कुप्य । का युष्माभिः सह प्रतिस्पर्धा । यतस्त्वं नाराच इव निरक्षरोऽपि रत्नतुलायां नियुज्यसे । अहं पुनस्तुलेव लब्धाक्षरापि न सुवर्णभाण्डे(लवे) विनियुज्ये ।

**विदूषकः**—एवं मह भणन्तीए तुह वामं दक्खिणं अ जुहिट्ठिरजेट्ठभाअरणामहेअं अङ्गजुअलं उप्पाडइस्सम् ।

**विचक्षणा**—अहं वि उत्तराफग्गुणीपुरस्सरणक्खत्तणामहेअं अङ्गं तुह झत्ति खण्डिस्सम् ।

**राजा**—वअस्स, मा एवं भण । कइत्तणे ट्ठिदा एसा ।

**विदूषकः**—(सक्रोधम् ।) उज्जुअं एव्व ता किं ण भणइ, अह्माणं चेडिआ हरिअन्दणन्दिअन्दकोट्टिसहालप्पहुदीणं पि पुरदो सुकइ त्ति ।

**राजा**—एवं णेदम् ।

(विदूषकः सक्रोधं परिक्रामति ।)

**विचक्षणा**—तहिं गच्छ जहिं मे पढमा साडिआ गदा ।

---

नाराचो लोहशलाका । नाराचस्य हि रत्नतुलावेधनमुपयोगः । तुलायास्तु सुवर्णभाण्डे न कोऽपीति निरक्षरलब्धाक्षरपदयोस्तात्पर्यम् ।

**विदूषकः**—

एवं मम भणन्त्यास्तव वामं दक्षिणं च युधिष्ठिरज्येष्ठभ्रातृनामधेयमङ्गयुगलमुत्पाटयिष्यामि ।

कर्णरूपमित्यर्थः । भाअरेति 'अते आरः सुपि' इत्यारादेशं बाधित्वा 'पितृभ्रातृयातृणामरः' इत्यरः ।

**विचक्षणा**—

अहमप्युत्तराफाल्गुनीपुरःसरनक्षत्रनामधेयमङ्गं तव झटिति खण्डयिष्यामि । हस्ताभिधमित्यर्थः ।

**राजा**—

वयस्य, मैवं भण । कवित्वे स्थितैषा ।

**विदूषकः**—

ऋज्वेव तर्किं न भण्यते, अस्माकं चेटिका हरिचन्द्रनन्दिचन्द्रकोटिशहालप्रभृतीनामपि पुरतः सुकविरिति ।

परातिगन्तु (?) मिति शेषः ।

**राजा**—

एवमेतत् ।

**विचक्षणा**—

तत्र गच्छ यत्र मे प्रथमा शाटिका गता ।

**विदूषकः**—(वलितग्रीवम्।) तुअं उण तहिं गच्छ जहिं मे मादाए पढमा दन्तावली गदा। ईदिसस्स राअउलस्स भद्दं भोदु, जहिं चेडिआ बम्हणेण समं समसीसिआए दीसदि। मइरा पञ्चगव्वं च एकस्सिं भण्डए कीरदि, कच्चं माणिक्कं च समं आहरणे पउञ्जीअदि।

**चेटी**—इह राअउले तं ते भोदु कण्ठट्ठिदं जं भअवं तिलोअणो सीसे समुव्वहदि। तेण च ते मुहं चूरीअदु जेण असोअतरू दोहदं लहदि।

**विदूषकः**—आः दासीए पुत्ति टेण्टाकराले कोससअवट्टणि रच्छालोट्टणि, एव्वं मं भणसि। ता मह महबम्हणस्स भणिदेण तं तुमं लहसु जं फग्गुणसमए सोहञ्जणो जणादो लहदि। जं पामराहिन्तो बइल्लो लहदि।

---

**विदूषकः**—

त्वं पुनस्तत्र गच्छ यत्र मे मातुः प्रथमा दन्तावली गता।

कर्णवीटिकेत्यर्थः।

**ईदिसस्सेति।**

ईदृशस्य राजकुलस्य भद्रं भवतु, यत्र चेटिका ब्राह्मणेन समं समशीर्षिकया दृश्यते।

समशीर्षिका प्रतिस्पर्धा।

**मइरेति।**

मदिरा पञ्चगव्यं चैकस्मिन्भाण्डे क्रियते, काचं माणिक्यं च सममाभरणे प्रयुज्यते।

**विचक्षणा**—

इह राजकुले तत्ते भवतु कण्ठस्थितं यद्भगवांस्त्रिलोचनः शीर्षे समुद्वहति।

अर्धचन्द्र इत्यर्थः।

**तेणेति।**

तेन च ते मुखं चूर्ण्यतां येनाशोकतरुर्दोहदं लभते।

पादप्रहारेणेत्यर्थः। 'पादाहतः प्रमदया विकसत्यशोकः' इति प्रसिद्धिः।

**विदूषकः**—

'आः दासीए' इत्यादि व्याख्यातम् (१७ पृष्ठे)।

**एव्वमिति।**

एवं मां भणसि। तन्मम महाब्राह्मणस्य भणितेन तत्त्वं लभस्व यत्फाल्गुनसमये शोभाञ्जनो जनाल्लभते। यत्पामरेभ्यो बलीवर्दो लभते।

फाल्गुनसमय इति धूलीप्रक्षेपादिकम्। बलीवर्द इति नासाच्छेदमित्यर्थः।

विचक्षणा—अहं उण तुह एवं भणन्तस्स णेउरस्स विअ पाअलग्गस्स पाएण मुहं चूरइस्सम् । अण्णं च, उत्तरासाढापुरस्सरणक्खत्तणामहेअं अक्खिजुअलं उप्पाडिअ खाक्खिस्सम् ।

विदूषकः—(सक्रोधं परिक्रामन् । जवनिकान्तरे किंचिदुच्चैः ।) ईरिसं राअ-उलं दूरे वन्दीअदि जहिं दासी बह्मणेण समं पडिसिद्धिं करेदि । ता अ-ज्जप्पहुदि णिअगेहणीए वसुंधराणामहेआए बह्मणीए चरणसुस्सूअओ भविअ गेहे जेव चिट्ठिस्सम् ।

(सर्वे हसन्ति ।)

देवी—अज्जउत्त, कीदिसी कविञ्जलेण विणा गोट्ठी, कीदिसी णअ-णञ्जणेण विणा पसाहणलच्छी ।

(आकाशे ।)

ण हु ण हु आगमिस्सम् । अण्णो को वि पिअवअस्सो अण्णेसीअदु । अहवा एसा दुट्ठदासी लम्बकुचा टप्परकण्णी पडिसीसअं देइअ मह ठाणे

---

विचक्षणा—

अहं पुनस्तवैवं भणतो नूपुरस्येव पादलग्नस्य पादेन मुखं चूर्णयिष्यामि ।

नूपुरदृष्टान्तेन व्यर्थप्रलापित्वमस्योक्तम् ।

अण्णं चेति ।

अन्यच्च, उत्तराषाढापुरःसरनक्षत्रनामधेयमक्षियुगलमुत्पाट्य क्षेप्स्यामि ।

श्रवणसंज्ञकमित्यर्थः । 'खाक्खिस्सम्' इति देशी । 'अन्यच्च ते पवननिष्क्रमणोच्छ्वसन-विवरस्थानमङ्गं खण्डयित्वा क्षेप्स्यामि' इति काचित्कः पाठः ।

जवनिकान्तर इति । 'अपटी काण्डपटीका प्रतिसीरा जवनिका तिरस्करिणी' इति तल्लक्षणम् ।

ईरिसमिति ।

ईदृशं राजकुलं दूरे वन्द्यतां यत्र दासी ब्राह्मणेन समं प्रतिस्पर्धां करोति । तदद्यप्रभृति निजगेहिन्या वसुंधरानामधेयाया ब्राह्मण्याश्चरणशुश्रूषुर्भूत्वा गेह एव स्थास्यामि ।

देवी—

आर्यपुत्र, कीदृशी कपिञ्जलेन विना गोष्ठी, कीदृशी नयनाञ्जनेन विना प्रसाधनलक्ष्मीः ।

उवहसणत्थं करीअदु। अहमेको मुदो तुम्हाणं सव्वाणं मज्झे, तुम्हे उण वरससअं जीअध।

**विचक्खणा**—मा अणुबन्धेहि। अणुणअकक्कसो क्खु कविञ्जलबम्हणो सलिलसित्तो विअ सणगुणगण्ठी चिरं गाढअरो भोदि। णं दंसणीअं दीसदु।

**राजा**—(समन्तादवलोक्य।)

गाअन्तगोवअवहूपदपेङ्खिआसु
दोलासु विब्भमवदीसु णिसण्णदिट्ठी।
जं जादि खञ्जिदतुरङ्गरहो दिणेसो
तेणेव होन्ति दिअहा अइदीहदीहा॥ २१॥

---

णेति।

न खलु न खल्वागमिष्यामि। अन्यः कोऽपि प्रियवयस्योऽन्विष्यताम्। अथवैषा दुष्टदासी लम्बकुचा टप्परकर्णा प्रतिशीर्षकं दत्त्वा मम स्थान उपहसनार्थं क्रियताम्। अहमेको मृतो युष्माकं सर्वेषां मध्ये, यूयं पुनर्वर्षशतं जीवत।

टप्परो वंशपात्रम्। 'टोपला' इति भाषायाम्। तद्वत्कर्णौ यस्याः। प्रतिशीर्षकलक्षणमुक्तम्। मम स्थान इति मदीयो वेषोऽन्यस्यै दातव्य इत्यर्थः।

**विचक्षणा**—

मानुबध्नीत। अनुनयकर्कशः खलु कपिञ्जलब्राह्मणः सलिलसिक्त इव शणगुणग्रन्थिश्चिरं गाढतरो भवति। ननु दर्शनीयं दृश्यताम्।

**राजा**—

गायद्गोपवधूपदप्रेङ्खितासु
दोलासु विभ्रमवतीषु निषण्णदृष्टिः।
यथाति खञ्जिततुरङ्गरथो दिनेश-
स्तेनैव भवन्ति दिवसा अतिदीर्घदीर्घाः॥

पदैश्चरणैः। प्रेङ्खितास्वान्दोलितासु। गोष्ठीभिर्विनातिदीर्घा दिवसा आलस्यमावहन्तीत्यानीयतां कपिञ्जलब्राह्मण इति ध्वन्यते, तेन प्रकृतसंगतिः। अत्र हेत्वतिशयोक्तिपर्यायोक्त्युत्प्रेक्षाः। अतिशयोक्तिपर्यायोक्ती दण्डिनोक्ते—'विवक्षायां विशेषस्य लोकसीमातिवर्तिनी। असावतिशयोक्तिः स्यादलंकारोत्तमा यथा॥' इति। 'अर्थमिष्टमनाख्याय साक्षात्तस्यैव सिद्धये। यत्प्रकारान्तराख्यानं पर्यायोक्तं तदिष्यते॥' इति।

(प्रविश्यापटीक्षेपेण ।)

**विदूषकः**—आसणमासणम् ।

**राजा**—किं तेण ।

**विदूषकः**—भैरवाणन्दो आअच्छदि ।

**देवी**—किं सो, जो जणवअणादो अच्चब्भुदसिद्धी सुणीअदि ।

**विदूषकः**—अध इं ।

**राजा**—पवेसअ ।

(विदूषको निष्क्रम्य तेनैव सह प्रविशति ।)

**भैरवानन्दः**—(किंचिन्मदमभिनीय पठति ।)

मन्तो ण तन्तो ण अ किं पि जाणं झाणं च णो किं पि गुरुप्पसादा ।
मज्जं पिआमो महिलं रमामो मोक्खं च जामो कुलमग्गलग्गा ॥ २२ ॥

---

प्रविश्येति । अपटी जवनिका ।

विदूषकः—

आसनमासनम् ।

दीयतामिति शेषः ।

राजा—

किं तेन ।

प्रयोजनमिति शेषः ।

विदूषकः—

भैरवानन्द आगच्छति ।

देवी—

किं सः, यो जनवचनादत्यद्भुतसिद्धिः श्रूयते ।

विदूषकः—

अथ किम् ।

राजा—

प्रवेशय ।

मन्तो इति ।

मन्त्रो न तन्त्रं न च किमपि ध्यानं ज्ञानं च नो किमपि गुरुप्रसादात् ।
मद्यं पिबामो महिलां रमयामो मोक्षं च यामः कुलमार्गलग्नाः ॥

अवि अ ।

रण्डा चण्डा दिक्खिदा धम्मदारा
मज्जं मंसं पिज्जए खज्जए अ ।
भिक्खा भोज्जं चम्मखण्डं च सेज्जा
कोलो धम्मो कस्स णो भादि रम्मो ॥ २३ ॥

किं च ।

मुत्तिं भणन्ति हरिबम्हमुहादिदेआ
झाणेण वेअपठणेण कदुक्किआए ।
एक्केण केवलमुमादइएण दिट्ठो
मोक्खो समं सुरअकेलिसुरारसेहिं ॥ २४ ॥

राजा—एदं आसणम् । उपविसदु भैरवाणन्दो ।

---

मन्त्रादिलक्षणान्यतिप्रयोजनतया न लिख्यन्ते । अत्र विरोधाभासः । स यथा दण्डिना प्रोक्तः—'विरुद्धानां पदार्थानां यत्र संसर्गदर्शनम् । विशेषदर्शनायैव स विरोधः स्मृतो यथा ॥' इति ।

अवि एति ।

अपि च ।

रण्डा चण्डा दीक्षिता धर्मदारा
मद्यं मांसं पीयते खाद्यते च ।
भिक्षा भोज्यं चर्मखण्डं च शय्या
कौलो धर्मः कस्य नो भाति रम्यः ॥

किं चेति ।

मुक्तिं भणन्ति हरिब्रह्ममुखादिदेवा
ध्यानेन वेदपठनेन क्रतुक्रियाभिः ।
एकेन केवलमुमादयितेन दृष्टो
मोक्षः समं सुरतकेलिसुरारसैः ॥

हरिब्रह्ममुखाश्च ते आदिदेवाश्चेति विग्रहः । अत्र व्यतिरेकः ।

राजा—

इदमासनम् । उपविशतु भैरवानन्दः ।

भैरवानन्दः—(उपविश्य ।) किं कादव्वम् ।

राजा—कहिं वि विसए अच्चरिअं दट्ठुमिच्छामि ।

भैरवानन्दः—

दंसेमि तं पि ससिणं वसुहावतिण्णं
थम्भेमि तस्स वि रविस्स रहं णहद्धे ।
आणेमि जक्खसुरसिद्धगणङ्गणाओ
तं णत्थि भूमिवलए मह जं ण सज्झम् ॥ २५ ॥

ता भण किं करीअदु ।

राजा—वअस्स, तुए कहिं पि अपुव्वं दिट्ठं महिलारअणम् ।

---

भैरवानन्दः—

किं कर्तव्यम् ।

किमीप्सितं ते मया कर्तव्यमित्यर्थः ।

राजा—

कस्मिन्नपि विषये आश्चर्यं द्रष्टुमिच्छामि ।

अनेन कारणाख्यमङ्गमुक्तम् । 'प्रकृतार्थस्य चारम्भः कारणं नाम तद्भवेत् ।' इत्युक्तत्वात् ।

भैरवानन्दः—

दर्शयामि तमपि शशिनं वसुधावतीर्णं
स्तम्भयामि तस्यापि रवे रथं नभोऽर्धे ।
आनयामि यक्षसुरसिद्धगणाङ्गना-
स्तन्नास्ति भूमिवलये मम यन्न साध्यम् ॥

एतेनावमर्शसंज्ञो व्यवसाय उक्तः । तत्रावमर्शलक्षणं दशरूपके—'क्रोधेनावमृशे-द्यत्र व्यसनाद्वापि लोभनात् । गर्भनिर्भिन्नबीजार्थः सोऽवमर्श इति स्मृतः ॥' इति । व्यवसायलक्षणमपि तत्रैव—'व्यवसायः स्वशक्त्युक्तिः' इति ।

ता इति ।

तद्भण किं क्रियताम् ।

राजा—

वयस्य, त्वया कुत्राप्यपूर्वं दृष्टं महिलारत्नम् ।

विदूषकः—दिट्ठं दाव ।

राजा—कहेहि ।

विदूषकः—अत्थि एत्थ दक्खिणावहे वच्छोमं णाम णअरम् । तहिं मए एक्कं कण्णारअणं दिट्ठम् । तमिहाणीअदु ।

भैरवानन्दः—आणीअदि ।

राजा—ओदारीअदु पुण्णिमाहरिणङ्को धरणीअले ।

(भैरवानन्दो ध्यानं नाटयति ।)

(ततः प्रविशति पटाक्षेपेण नायिका । सर्वे आलोकयन्ति ।)

राजा—अहह, अच्चरिअं अच्चरिअम् ।

जं धोअञ्जणसोणलोअणजुअं लग्गालअग्गं मुहं
हत्थालम्बिदकेसपल्लवचए दोल्लन्ति जं बिन्दुणो ।

---

विदूषकः—

दृष्टं तावत् ।

राजा—

कथय ।

विदूषकः—

अस्त्यत्र दक्षिणापथे वैदर्भं नाम नगरम् । तत्र मयैकं कन्यारत्नं दृष्टम् । तदिहानीयताम् ।

कन्यारत्नमुत्कृष्टा कन्या । 'जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते' इत्युक्तत्वात् ।

भैरवानन्दः—

आनीयते ।

राजा—

अवतार्यतां पूर्णिमाहरिणाङ्को धरणीतले ।

पूर्णिमाचन्द्रवदाह्लादकारि स्त्रीरत्नमानीयतामित्यर्थः । दृष्टान्तालंकारः । नायिका कर्पूरमञ्जरी ।

राजा—

अहह, आश्चर्यमाश्चर्यम् ।

यद्धौताञ्जनशोणलोचनयुगं लग्नालकाग्रं मुखं
हस्तालम्बितकेशपल्लवचये दोलायन्ते यद्बिन्दवः ।

जं एक्कं सिचअञ्चलं णिवसिदं तं ह्णाणकेलिट्ठिदा
आणीदा इअमब्भुदेक्कजणणी जोईसरेणामुणा ॥ २६ ॥

अवि अ ।

एक्केण पाणिणलिणेण णिवेसअन्ती
वत्थञ्चलं घणथणत्थलसंसमाणम् ।
चित्ते लिहिज्जदि ण कस्स वि संजमन्ती
अण्णेण चङ्कमणदो चलिदं कडिल्लम् ॥ २७ ॥

विदूषकः—

ह्णाणावमुक्काहरणोच्चआए तरङ्गभङ्गक्खदमण्डणाए ।
उल्लंसुउल्लासिअणूलआए सुन्देरसव्वस्समिमीअ दिट्ठी ॥ २८ ॥

---

*यदेकं सिचयाञ्चलं निवसितं तत्स्नानकेलिस्थिता
आनीतेयमद्भुतैकजननी योगीश्वरेणामुना ॥*

धौताञ्जनमत एव शोणमित्यर्थः । सिचयस्य वस्त्रस्याञ्चलं पल्लवं तन्निवसितं पृथग्भूतम् । सवञ्जलमित्यर्थः । अत्र स्वभावोक्तिः ।

अवि एत्ति ।

अपि च ।

एकेन पाणिनलिनेन निवेशयन्ती
वस्त्राञ्चलं घनस्तनस्थलसंसमानम्
चित्रे लिख्यते न कस्यापि संयच्छन्ती
अन्येन चङ्क्रमणतश्चलितं कटिवस्त्रम् ॥

कडिल्लमिति देशी । अथ 'तस्येदम्' इत्यस्मिन्नर्थे 'उल्ल इल्लस्तु तद्भवे' इतील्लः । अपिशब्दश्चार्थे, अन्येनेत्यनन्तरं पठितव्यः । चित्रलिखितेव कामुकमनसि लगतीत्यर्थः । अत्र प्रलयाख्यः सात्त्विको भावः । स यथा रसकलिकायाम्—'प्रलयो रागदुःखादेरिन्द्रियास्तमयो मतः ।' इति । स एव चानुभावः । चिन्तादयो व्यभिचारिणः । यौवनादय आलम्बनगुणा विभावाः । अभिलाषाख्या शृङ्गारावस्था ।

विदूषकः—

स्नानावमुक्ताभरणोच्चयायास्तरङ्गभङ्गक्षतमण्डनायाः ।
आर्द्रांशुकोल्लासिततनुलतायाः सौन्दर्यसर्वस्वमस्या दृष्टिः ॥

**नायिका**—(सर्वानवलोक्य। स्वगतम्।) एसो महाराओ को वि इमिणा गम्भीरमहुरेण सोहासमुदाएण जाणिज्जदि। एसा वि इमस्स महादेवी तक्कीअदि। अद्धणारीसरस्स विअ अकहिआ वि गोरी। एसो को वि जोईसरो। एस उण परिअणो। (विचिन्त्य।) ता किं ति एदस्स महिलासहिदस्स वि दिट्ठी मं बहु मण्णेदि। (इति त्रस्तं वीक्षते।)

**राजा**—(विदूषकमपवार्य।) एदाए

> जं मुक्का सवणन्तरेण तरला तिक्खा कडक्खच्छडा
> सिङ्गाचिट्ठिअकेअअग्गिमदलद्दोणीसरिच्छच्छई।

---

दृष्टिरत्र तटस्थः। अन्यत्पूर्ववत्। अत्र रूपमुक्तम्। तथथा सुधाकरे—'अज्ञान्यभूषितान्येव प्रक्षेपाद्यैर्विभूषणैः। येन भूषितवद्भान्ति तद्रूपमिह कथ्यते ॥' इति। मृदवं नामाङ्गमप्युक्तम्—'दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तत्।' इति तल्लक्षणम्। 'सुश्लिष्टसंधिबन्धो यस्तत्सौन्दर्यमितीर्यते।' इति सौन्दर्यलक्षणम्।

**नायिका**—एसो इति।

एष महाराजः कोऽप्यनेन गम्भीरमधुरेण शोभासमुदायेन ज्ञायते। एषाप्यस्य महादेवी तर्क्यते। अर्धनारीश्वरस्येवाकथितापि गौरी। एष कोऽपि योगीश्वरः। एष पुनः परिजनः। तत्किमित्येतस्य महिलासहितस्यापि दृष्टिर्मां बहु मन्यते।

त्रस्तमिति क्रियाविशेषणम्। अनेन कातराख्यं दर्शनमुक्तम्। 'सभयान्वेषणपरं यत्तत्कातरमुच्यते।' इति तल्लक्षणम्।

**राजा**—अपवार्येति। अपवारणेन जनान्तिकमुच्यते। अत एवोक्तं दशरूपके—'त्रिपताककरेणान्यानपवार्यान्तरा कथाम्। अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम् ॥' इति। त्रिपताका तु संगीतरत्नाकरे—'तर्जनीमूलसंलग्नकुञ्चिताङ्गुष्ठको भवेत्। पताकः संहताकारः प्रसारितकराङ्गुलिः ॥ स एव त्रिपताकः स्याद्वक्रितानामिकाङ्गुलिः।' इति।

एदाए इति।

एतस्याः

> यन्मुक्ता श्रवणान्तरेण तरला तीक्ष्णा कटाक्षच्छटा
> शृङ्गाचिट्ठितकेतकाग्रिमदलद्रोणीसदृक्षच्छविः।

तं कप्पूररसेण णं धवलिदो ज्योह्णाअ णं ह्णाविदो
　मुत्ताणं घणरेणुण व्व छुरिदो जादो म्हि एत्थन्तरे ॥ २९ ॥

विदूषकः—अहो से रूअरेहा ।

मण्णे मज्झं तिवलिवलिअं डिम्भमुट्ठीअ गेझं
　णो बाहूहिं रमणफलअं वेढ़िदुं जादि दोहिं ।
णेत्तच्छेत्तं तरुणिपसईदिज्जमाणोवमाणं
　ता पच्चक्खं मह विलिहिदुं जादि एसा ण चित्ते ॥ ३० ॥

---

तत्कर्पूररसेन ननु धवलितो ज्योत्स्नया ननु स्नापितो
　मुक्तानां घनरेणुनेव च्छुरितो जातोऽस्म्यत्रान्तरे ॥

श्रोणीपदं नेत्रयोरत्यन्तविपुलताकथनार्थम् । अत्र हेत्वतिशयोत्प्रेक्षाविरोधाभासाः । तीक्ष्णकटाक्षनाटनेऽत्यन्तनिवृत्तेर्विरोधः । सितकृष्णौ कटाक्षावुक्तौ । तरलेति तरलिताह्वयो दृग्विकार उक्तः । 'तरलं तदिति प्राहुर्लोलतारकनीनिकम् ।' इति । श्रवणान्तर इति 'त्र्यस्रं तिर्यगुदञ्चितम्' इति त्र्यस्राह्वयः । एतेषु वेषेषु केषुचिद्रसाभासो ज्ञेयः । नायिकाया असर्पिरसोदयाभावात् । 'एकस्यैवानुरागश्चेदथवा तिर्यगाश्रितः । पोषितो बहुभक्तिश्चेद्रसाभासस्त्रिधा मतः ॥' इत्युक्तत्वात् । अत्र संप्रयोगः । रत्याख्यः स्थायिभावः । सर्वत्रालम्बनं नायिका नायकश्च । यौवनादिरालम्बनगुणः । विलासादिका चेष्टा । अलंकृतिर्वेणाद्या । वसन्तस्तटस्थः । एते आलम्बनोद्दीपनविभावाः । पूर्वोक्ता दृग्विकारा अनुभावाः । रोमाञ्चादयः सात्त्विका ज्ञेयाः । हर्षादयो व्यभिचारिणः । चक्षुःप्रीत्यादयस्तटस्थाः । भरतस्तु—'तात्कालिको विकारः स्याद्दयितालोकनादिषु । आदरावीक्षणं चैव चक्षुःप्रीतिरुदीर्यते ॥' इति । रसादिलक्षणानि त्वनतिप्रयोजनत्वाद्गौरवाच्च नोच्यन्ते । एवं विभावादयः सर्वत्र ज्ञेयाः ॥

विदूषकः—

अहो अस्या रूपरेखा ।

मन्ये मध्यं त्रिवलिवलितं डिम्भमुष्ट्या ग्राह्यं
　नो बाहुभ्यां रमणफलकं वेष्टितुं याति द्वाभ्याम् ।
नेत्रक्षेत्रं तरुणीप्रसृतिदीयमानोपमानं
　तत्प्रत्यक्षं मया विलिखितुं यात्येषा न चित्ते ॥

रमणफलकं जघनपरिसरः । नेत्रक्षेत्रं चक्षुःपरिसरः । चित्ते विलिखितुं धारयितुं न शक्नोमीत्यर्थः । डिम्भो बालः । क्षेत्रशब्देन नानादृग्विकारास्पदत्वं व्यज्यते । अत्र रूपलावण्यसौन्दर्याण्युक्तानि । लावण्यं तु 'मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा ।

कधं ह्णाणधोविदविलेवणा समुत्तारितविहूसणा वि रमणिज्जा। अहवा।

जे रूअमुक्का वि विहूसयन्ति ताणं अलंकारवसेण सोहा।
णिसग्गचङ्गस्स वि माणुसस्स सोहा समुम्मीलदि भूसणेहिं॥ ३१॥

राजा—एदाए दाव एव्वम्।

लावण्णं णवजच्चकञ्चणणिहं णेत्ताण दीहत्तणं
कण्णेहिं खडिदं कओलफलआ दोखण्डचन्दोवमा।
एसा पञ्चसरेण सज्जिदधणूदण्डेण रक्खिज्जए
जेणं सोसणमोहणप्पहुदिणो विज्झन्ति मं मग्गणा॥ ३२॥

---

प्रतिभाति यदङ्गेषु लावण्यं तदिहोच्यते॥' इति। उपमालंकारः। शृङ्गारस्य दीप्तत्वात् 'कान्तिर्दीप्तरसत्वं स्यात्' इति कान्तिर्वाक्यार्थगुण उक्तः। गाम्भीर्यं च। विभावादिकं तु पूर्ववदेव॥

कथं स्नानधौतविलेपना समुत्तारितविभूषणापि रमणीया। अथवा।

या रूपमुक्ता अपि विभूषयन्ति तासामलंकारवशेन शोभा।
निसर्गचङ्गस्यापि मानुषस्य शोभा समुन्मीलति भूषणैः॥

यासां सौन्दर्यं नास्ति तासामलंकारेण शोभा। यस्य तु मनुष्यस्य नैसर्गिकं सौन्दर्यं तस्यालंकारैः कान्तिरुन्मीलति। न त्वसत्येव जायत इत्यर्थः। अत्र समाधिः। यथा काव्यप्रकाशे—'समाधिः सुकरं कार्यं कारणान्तरयोगतः'॥

राजा—

एतस्यास्तावदेवम्।

वर्तत इति शेषः।

लावण्यं नवजात्यकाञ्चननिभं नेत्रयोर्दीर्घत्वं
कर्णाभ्यां स्खलितं कपोलफलकौ द्विखण्डचन्द्रोपमौ।
एषा पञ्चशरेण सज्जितधनुर्दण्डेन रक्ष्यते
येन शोषणमोहनप्रभृतयो विध्यन्ति मां मार्गणाः॥

द्विधाभूतचन्द्रशकलद्वयनिभाविति द्विखण्डेत्यस्यार्थः। यथोद्यानवाटिकारक्षकस्तत्पुष्पफलादिजिघृक्षया तद्ग्रहीतारं हन्ति तथेति वस्तुनोपमा व्यज्यते। शोषणेनान्ये गात्रजा मोहनेनान्या मानसाश्च विकारा उपलक्षिताः। मोहस्तु रसकलिकायाम्—'मोहस्तु मूर्छनं भीतिर्दुःखवेगानुचिन्तनैः। तत्राज्ञानभ्रमापातघूर्णनादर्शनादयः॥' इति॥

**विदूषकः**—(विहस्य ।) जाणे रत्थाए लोट्टदि से सोहारअणम् ।

**राजा**—(विहस्य ।) पिअवअस्स, कधेमि दे ।

अङ्गं चङ्गं णिअगुणगणालंकिदं कामिणीणं
पच्छाअन्ती उण तणुसिरिं भादि णेवच्छलच्छी ।
इत्थं जाणं अवअवगदा कावि सुन्देरमुद्दा
मण्णे ताणं वलइदधणू णिच्चमिच्चो अणङ्गो ॥ ३३ ॥

अवि अ । एदाए

तहा रमणवित्थरो जह ण ठाइ कञ्चीलदा
तहा अ थणतुङ्गिमा जह ण एइ णाहिं मुहम् ।
तहा णअणबंहिमा जह ण किंपि कण्णुप्पलं
तहा अ मुहमुज्जलं दुससिणी जहा पुण्णिमा ॥ ३४ ॥

---

**विदूषकः**—

जाने रथ्यायां लुठत्यस्याः शोभारत्नम् ।

रथ्यामध्यस्थितरत्नवदखिलजनरञ्जकमित्यर्थः ।

**राजा**—

प्रियवयस्य, कथयामि ते ।

अङ्गं चङ्गं निजगुणगणालंकृतं कामिनीनां
प्रच्छादयन्ती पुनस्तनुश्रियं भाति नेपथ्यलक्ष्मीः ।
इत्थं यासामवयवगता कापि सौन्दर्यमुद्रा
मन्ये तासां वलयितधनुर्नित्यमृत्योऽनङ्गः ॥

अवयवगतेति । सर्वाङ्गव्यापि सौन्दर्यमुक्तम् । नित्यभृत्य इति । भृत्यो यथा भर्त्राज्ञा-मन्तरेणापि तदाशयमेव विज्ञाय कार्यं कुरुते तथा कामिनीकटाक्षमात्रेणैव कामिनो वशी करोति काम इत्युत्प्रेक्षयोपमा ध्वन्यते । अत्र सारः । स यथा काव्यप्रकाशे—'उत्तरो-त्तरमुत्कर्षो भवेत्सारः परावधिः ।' इति ॥

अपि च । एतस्याः

तथा रमणविस्तरो यथा न तिष्ठति काञ्चीलता
तथा च स्तनतुङ्गिमा यथा नैति नाभिं मुखम् ।
तथा नयनबंहिमा यथा न किमपि कर्णोत्पलं
तथा च मुखमुज्ज्वलं द्विशशिनी यथा पूर्णिमा ॥

देवी—अज्ज कञ्जिजल, पुच्छिअ आण का एसा त्ति।

विदूषकः—(तां प्रति।) एहि मुद्धमुहि, उअविसिअ णिवेदेहि का तुमं त्ति।

राजा—आसणमिमीए।

विदूषकः—एदं मे उत्तरीअं आअणम्।

(विदूषकनायिके वस्त्रदानोपवेशने नाटयतः।)

विदूषकः—भोदि, संपदं कहिज्जदु।

नायिका—अत्थि एत्थ वच्छोमं णाम णअरं कुन्तलेसु। तहिं सअल-जणवल्लहो वल्लहराओ णाम राआ।

देवी—(स्वगतम्।) जो मह माउसिआए पई होई।

---

न किमपीति न शोभावहमित्यर्थः। क्वचित् 'बुड्डिमा' इति पाठः। क्वचिच्च 'वट्टिमा' इति। तदुभयमप्यप्रमाणम्। 'वृद्धवृत्तशब्दाभ्याम्' इति ष्णः क्वचिददृष्टत्वात्। द्विशाखि-नीति 'नद्यृतश्च' इति न कप्। अनित्यत्वात्। अद्भुतोपमया वपुषः परमाह्लादकत्वं ध्वन्यते। चरणत्रयेऽतिशयोक्तिर्हेतू। चतुर्थे तूपमायाः कृतत्वात्प्रक्रमभङ्गः 'तहा अ मुहमुज्जलं जह ण उज्जलं कञ्चणम्' इति पठित्वा समाधेयः॥

देवी—

आर्य कपिञ्जल, पृष्ट्वा जानीहि कैषेति।

विदूषकः—

एहि मुग्धमुखि, उपविश्य निवेदय का त्वमिति।

तां नायिकाम्। मुग्धं सुन्दरम्।

राजा—

आसनमस्यै।

विदूषकः—

एतन्म उत्तरीयमासनम्।

विदूषकः—

भवति, सांप्रतं कथ्यताम्।

नायिका—

अस्त्यत्र विदर्भं नाम नगरं कुन्तलेषु। तत्र सकलजनवल्लभो वल्लभराजो नाम राजा।

देवी—

यो मम मातृष्वसुः पतिर्भवति।

नायिका—तस्स घरिणी ससिप्पहा णाम।

देवी—(स्वगतम्।) सा वि मे माउस्सिआ।

नायिका—तेहिं अहं उपण्णेत्ति।

देवी—(स्वगतम्।) ण हु ससिप्पहागब्भुप्पत्तिमन्तरेण ईदिसी रूअरेहा होदि। ण हु वेडुलिअभूमिगब्भुप्पत्तिमन्तरेण वेडुलिअमणिसलाआ णिप्पज्जई। (प्रकाशम्।) णं तुमं कप्पूरमञ्जरी।

(नायिका सलज्जमधोमुखी तिष्ठति।)

देवी—एहि बहिणिए, आलिङ्गेसु मम्। (इति परिष्वजते।)

कर्पूरमञ्जरी—अज्जे, कप्पूरमञ्जरीए एसो पढमो पणामो।

देवी—अज्ज भैरवाणन्द, तुह प्पसादेण अपुव्वं संविहाणअं अणुहविदं कप्पूरमञ्जरीदंसणेण। ता चिट्ठदु दाव एसा पञ्चदसदिअहाइं। पच्छा झाणविमाणेण णइस्सध।

---

नायिका—

तस्य गृहिणी शशिप्रभा नाम।

देवी—

सापि मे मातृष्वसा।

नायिका—

ताभ्यामहमुत्पन्नेति।

देवी—

न खलु शशिप्रभागर्भोत्पत्तिमन्तरेणेदृशी रूपरेखा भवति। न खलु वैदूर्यभूमिगर्भोत्पत्तिमन्तरेण वैदूर्यमणिशलाका निष्पद्यते। ननु त्वं कर्पूरमञ्जरी।

देवी—

एहि भगिनिके, आलिङ्गय माम्।

कर्पूरमञ्जरी—

आर्ये, कर्पूरमञ्जर्या एष प्रथमः प्रणामः।

प्रथम इत्येतावन्तं कालमदृष्टत्वात्प्रणामस्य प्राथम्यमुक्तम्।

देवी—

आर्य भैरवानन्द, तव प्रसादेनापूर्वं संविधानकमनुभूतं कर्पूरमञ्जरीदर्शनेन। तत्तिष्ठतु तावदेषा पञ्चदशदिवसानि। पश्चाद्ध्यानविमानेन नेष्यथ।

**भैरवानन्दः**—जं भणादि देई।

**विदूषकः**—(राजानमुद्दिश्य।) भो वअस्स, अह्मे परं दुए वि बाहिरा एत्थ। जदो एदाणं मिलिदं कुटुम्बं वट्टदि। जदो इमीए दुओ वि बहिणिआओ। भैरवाणन्दो उण एदाणं संजोअअरो अच्चिदो मण्णिदो अ। एसा वि महीअलसरस्सई अ कुट्टणी देहन्तरेण देवी जेव।

**देवी**—विअक्खणे, णिअजेट्ठबहिणिअं सुलक्खणं भणिअ भैरवाणन्दस्स हिअअट्ठिआ सपज्जा कादव्वा।

**विचक्षणा**—जं देवी आणवेदि।

**देवी**—(राजानं प्रति।) अज्जउत्त, पेसिहि मम्, जेण अहं बहिणाए एदावत्थाए णेवच्छलच्छीलीलाणिमित्तं अन्तेउरं गमिस्सम्।

---

संविधानकमुपचारः। ध्यानलब्धं विमानं ध्यानविमानम्। नेप्यथेति पूजायां बहुवचनम्।

**भैरवानन्दः**—

यद्भणति देवी।

**विदूषकः**—

भो वयस्य, आवां परं द्वावपि बाह्यावत्र। यत एतासां मिलितं कुटुम्बकं वर्तते। यत इमे द्वे अपि भगिन्यौ। भैरवानन्दः पुनरेतयोः संयोगकरोऽर्चितो मानितश्च। एषापि महीतलसरस्वती च कुट्टनी देहान्तरेण देव्येव।

यथा राज्ञीपूजिता तथेयमपीति सोल्लुण्ठम्।

**देवी**—

विचक्षणे, निजज्येष्ठभगिनिकां सुलक्षणां भणित्वा भैरवानन्दस्य हृदयेप्सिता सपर्या कर्तव्या।

हृदयस्थितेन वार्थः। तदा यथाभिलषितमित्यर्थः।

**विचक्षणा**—

यद्देव्याज्ञापयति।

**देवी**—

आर्यपुत्र, प्रेषय माम्, येनाहं भगिन्या एतदवस्थाया नेपथ्यलक्ष्मीलीलानिमित्तमन्तःपुरं गमिष्यामि।

राजा—जुज्जदि चम्पअलदाए कत्थूरिआकप्पूरेहिं आलवालपरिपूरणम्।

(नेपथ्ये ।)

वैतालिकयोरेकः—सुहाअ संझा भोदु देवस्स ।

एदं वासरजीवपिण्डसरिसं चण्डंसुणो मण्डलं
को जाणादि कहिं पि संपदि गदं एतम्मि कालन्तरे ।
जादा किं च इअं पि दीहविरहा सोएण णाहे गदे
मुच्छामुद्दिदलोअणे व णलिणी मीलन्तपङ्केरुहा ॥ ३५ ॥

द्वितीयः—

उग्घाडीअन्ति लीलामणिमअवलहीचित्तभित्तीणिवेसा
पल्लङ्का किंकरीहिं रिदुसमअसुहा वित्थरिज्जन्ति झत्ति ।
सेरन्धीलोलहत्थङ्गुलिचलणवसा पट्टनादो पउट्टो
हुंकारो मण्डपेसुं विलसदि महुरो रुट्टतुट्टङ्गणाणम् ॥ ३६ ॥

---

राजा—

युज्यते चम्पकलतायाः कस्तूरीकर्पूरैरालवालपरिपूरणम् ।

अवश्यमस्या नेपथ्यं कर्तव्यमित्यर्थः । समासोक्तिरत्र । सा यथा काव्यप्रकाशे—'परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः' इति ।

वैतालिकः—

सुखाय संध्या भवतु देवस्य ।

एतद्वासरजीवपिण्डसदृशं चण्डांशोर्मण्डलं
को जानाति क्वापि संप्रति गतमेतस्मिन्कालान्तरे ।
जाता किं चेयमपि दीर्घविरहा शोकेन नाथे गते
मूर्च्छामुद्रितलोचनेव नलिनी मीलत्पङ्केरुहा ॥

दिवसस्य प्राणतुल्यमिति वासरेत्याद्यर्थः । कालान्तरे सायंसमये । अत्रोत्प्रेक्षा । भवद्दर्शनात्संजातमदना कर्पूरमञ्जरीति समासोक्तिश्च । नायिकाधर्माणां नलिन्यामारोपितत्वात्समाधिरपि ॥

द्वितीयः—

उद्घाट्यन्ते लीलामणिमयवलभीचित्रभित्तिनिवेशाः
पर्यङ्काः किंकरीभिः ऋतुसमयसुखा विस्तार्यन्ते झटिति ।
सैरन्ध्रीलोलहस्ताङ्गुलिचलनवशात्पट्टनादः प्रवृत्तो
हुंकारो मण्डपेषु विलसति मधुरो रुष्टतुष्टाङ्गनानाम् ॥

राजा—अम्हे वि संझं वन्दिदुं गमिस्सामो।

(इति निष्क्रान्ताः सर्वे।)

इति प्रथमं जवनिकान्तरम्।

---

लीलार्थं मणिमय्यो वलभ्यश्च चित्रभित्तिनिवेशाश्चेति विग्रहः। चित्रभित्तिनिवेशाश्चित्रगृहाः। ते उद्घाट्यन्ते। अभिसारिकाभ्यमिसारस्यार्थम्। किंकरीभिर्दासीभिः। ऋतुः प्रस्तुतो वसन्तः। सैरन्ध्री प्रसाधिका। पट्हो मृदङ्गः। इत्येतावतैव सिद्धेऽर्थेऽङ्गुलिपदं तासां वाद्यवादनकौशलसूचनाय। [आद्यपदेनाभिसारिकाद्या उपक्षिप्ता नायिकाः।] दृष्टतुष्टेत्यनेन कलहान्तरिताख्या इति ध्वनितम्॥

राजा—

वयमपि संध्यां वन्दितुं गमिष्यामः।

इति श्रीमद्विद्वद्वृन्दवन्दितारविन्दसुन्दरपदद्वन्द्वकुन्दप्रतिमयशःप्रकरप्रखरकठोरकिरणकरप्रमप्रतिभप्रभाकरभट्टात्मजवासुदेवविरचिते कर्पूरमञ्जरीप्रकाशे प्रथमं जवनिकान्तरं समाप्तम्।

---

द्वितीयं जवनिकान्तरम् ।

(ततः प्रविशति राजा प्रतीहारी च ।)

**प्रतीहारी**—(परिक्रामितकेन ।) इदो इदो महाराओ ।

**राजा**—(कतिचित्पदानि गत्वा । तामनुसंधाय ।) तहिं क्खु अवसरे

ण ठ्ठाणाहिं तिलन्तरं वि चलिदा तुत्था णिअम्बत्थली
थोउव्वेल्लवलीतरङ्गमुअरं कण्ठो तिरच्छि ट्ठिदो ।
वेणीए उण आणणेन्दुवलणे लद्धं थणालिङ्गणं
जादा तीअ चउव्विहा तणुलदा णिज्झाअअन्तीअ मम् ॥ १ ॥

**प्रतीहारी**—(स्वगतम् ।) कधं अज्ज वि सो ज्जेव तालीपत्तसंचओ, ताओ विअ अक्खरपन्तीओ । ता वसन्तवण्णणेण सिढिलआमि से तग्गदं

---

प्रतीहारी—

इत इतो महाराजः ।

आयात्विति शेषः ।

राजा—

गत्वेत्यनन्तरमाह स्मेति शेषः ।

तस्मिन्खल्ववसरे

न स्थानात्तिलान्तरमपि चलिता तस्या नितम्बस्थली
स्तोकोद्वेल्लद्वलीतरङ्गमुदरं कण्ठस्तिर्यक्स्थितः ।
वेण्या पुनराननेन्दुवलने लब्धं स्तनालिङ्गनं
जातास्तस्याश्चतुर्विधा तनुलता निध्यायन्त्या माम् ॥

अत्र स्मृतिः । तल्लक्षणं साहित्यदर्पणे—'सदृशज्ञानचिन्ताद्यैर्भ्रूसमुन्नयनादिकृत् । स्मृतिः पूर्वानुभूतार्थविषयज्ञानमुच्यते ॥' परिकरोऽलंकारः । तल्लक्षणमुक्तं वृद्धैः—'विशेषणसाभिप्रायत्वे परिकरः' इति । अत्र च वलीतरङ्गादिविशेषणानां तथात्वमूह्यम् । रूपकं चात्र । तल्लक्षणमुक्तं मम्मटेन—'तद्रूपकमभेदो य उपमानोपमेययोः ।' इति । न स्थानात्तिलान्तरमपीत्यनेन नितम्बस्य गरिमातिशयो व्यज्यते । वलीतरङ्गमित्यनेन चञ्चलतातिशयो व्यज्यते । तनुलतेत्यनेन च कार्श्यचापल्यमैत्र्यादिलतागुणवत्त्वं वपुषो ध्वन्यते ।

प्रतीहारी—

कथमद्यापि स एव तालीपत्रसंचयः, ता एवाक्षरपङ्क्तयः । तद्वसन्तवर्णनेन शिथिलयाम्यस्य तद्गतं हृदयावेगम् ।

हिअआवेअम्। (प्रकाशम्।) दिट्ठिं देउ महाराओ ईसीसि जरठाअमाणे कुसु-माअरम्मि।

मूलाहिन्तो परहुअवहूकण्ठमुद्दं दलन्ता
देन्ता दीहं महुरिमगुणं जप्पिए छप्पआणम्।
संचारन्ता विरहिसु णवं पञ्चमं किंच राअं
राउम्मत्ता रइकुलघरा वासरा वित्थरन्ति॥ २॥

राजा—(तदेवाकर्ण्य सानुरागम्।)

अत्थाणीजणलोअणाण बहला लावण्णकल्लोलिणी
लीलाविब्भमहासवासणअरी सोहग्गपालिट्ठिआ।

---

आवेगशब्देन यद्यपि सर्वथा नास्य तन्मनस्कता निराकर्तुं शक्यते, तथापि विषया-न्तरसंचारेण किंचिच्छिथिलयामीति चोच्यते।

दिट्ठिमिति।

दृष्टिं ददातु महाराज ईषदीषज्जरठायमाणे कुसुमाकरे।

कुसुमानामाकर उत्पत्तिस्थानमित्यर्थः। कुसुमानामाकरः समूहो यस्मिन्निति वा। कुसुमैराकर इति वा। 'आकरो निवहोत्पत्तिस्थानश्रेष्ठेषु कथ्यते।' इति विश्वः।

मूलेति।

मूलाप्रभृति परभृतवधूकण्ठमुद्रां दलन्तो
ददतो दीर्घं मधुरिमगुणं जल्पिते षट्पदानाम्।
संचारयन्तो विरहिषु नवं पञ्चमं किंचिद्रागं
रागोन्मत्ता रतिकुलगृहा वासरा विस्तीर्यन्ते॥

परभृतवध्वः कोकिलस्त्रियः। परभृता वध्व इवेति वा। पक्षद्वयेऽपि संभोगशृङ्गारो व्यङ्ग्यः। मधुरिमैव गुणः। मधुरिम्णा गुणविशेष इति वा। तेन दुःसहत्वे च तेषां तस्य भावादिति भावः (?)। 'पुष्पसाधारणे काले पिकः कूजति पञ्चमम्।' किंचिद्रागमिति पञ्चममित्यस्य विशेषणम्। किंचिद्रागो यस्यां क्रियायामिति यथा भवति तथेति क्रिया-विशेषणं वा। रतयः संभोगास्तेषां कुलं समूहस्तस्य गृहाः स्थानानीत्यर्थः। यद्वा रति-कुलस्य प्रीतिसमुदायस्य गृहाः स्थानानि। तत्र्वनकलादित्याशयः।

राजा—

आस्थानीजनलोचनानां बहला लावण्यकल्लोलिनी
लीलाविभ्रमहासवासनगरी सौभाग्यपारस्थिता।

णेत्तेन्दीवरदीहिआ मह पुणो सिङ्गारसंजीअणी
संजादा अह मम्महेण धणुहे तिक्खो सरो पुङ्खिदो ॥ ३ ॥

(सोन्मादमिव ।) दंसणक्खणादो पहुदि कुरङ्गच्छी
चित्ते चिहुट्टदि ण खुट्टदि सा गुणेसु
सेज्जासु लोट्टदि विसप्पदि दिम्मुहेसु ।
बोल्लम्मि वट्टदि पअट्टदि कव्वबन्धे
झाणेण तुट्टदि चिरं तरुणी तरट्टी ॥ ४ ॥

अवि अ ।

जे तीअ तिक्खचलचक्खुतिहाअदिट्ठा
ते कामचन्दमहुपञ्चममारणिज्जा ।

---

नेत्रेन्दीवरदीर्घिका मम पुनः श्रृङ्गारसंजीविनी
संजाताथ मन्मथेन धनुषि तीक्ष्णः शरः पुङ्खितः ॥

लावण्यकल्लोलिनीत्यनेन प्रतिक्षणं सौन्दर्यातिशयवृद्धिर्व्यज्यते । वासनगरीत्यनेन क्षणमपि तद्विच्छेदाभावो ध्वन्यते । तीक्ष्ण इत्यनेन पूर्वमपि शरसंधानमासीदेव, इदानीं त्वतिदुःसहं तदेतादृशशरविस्तारणा द्योत्यते ।

**सोन्मादमिति**। उन्मादलक्षणं श्रृङ्गारतिलके—'श्वासप्ररोदनोत्कम्पवसुधोल्लेखनैरपि । व्यापारो जायते यत्र स उन्मादः स्मृतो यथा ॥' इति । साहित्यदर्पणेऽपि—'चित्तस्य भ्रम उन्मादः कामशोकभयादिभिः । अस्थानहासरुदितगीतप्रलपनादिकृत् ॥' इति ।

**दंसणेत्ति**।

दर्शनक्षणात्प्रभृति कुरङ्गाक्षी
चित्ते लगति न क्षीयते सा गुणेषु
शय्यायां लुठति विसर्पति दिङ्मुखेषु ।
वचने वर्तते प्रवर्तते काव्यबन्धे
ध्यानेन त्रुट्यति चिरं तरुणी चलाक्षी ॥

अपि च ।

ये तया तीक्ष्णचलचक्षुस्त्रिभागदृष्टा-
स्ते कामचन्द्रमधुपञ्चममारणीयाः ।

जेसुं पुणो णिवडिदा सअला वि दिट्ठी
वट्टन्ति ते तिलजलञ्जलिदाणजोग्गा ॥ ५ ॥

(सस्मरणमिव ।) अवि अ ।

अग्गम्मि भिङ्गसरणी णअणाण तीए
मज्झे पुणो कढिददुद्धतरङ्गमाला ।
पच्छा अ से सरदि तंसणिरीक्खिदेसु
आअण्णमण्डलिअचावधरो अणङ्गो ॥ ६ ॥

(विचिन्त्य ।) कधं चिरअदि पिअवअस्सो ।

(प्रविश्य विदूषको विचक्षणा च परिक्रामतः ।)

विदूषकः—अइ विअक्खणे, सव्वं सच्चं एदम् ।

विचक्षणा—सव्वं सच्चअरम् ।

विदूषकः—णाहं पत्तिज्जामि, जदो परिहाससीला क्खु तुमम् ।

---

येषु पुनर्निपतिता सकलापि दृष्टि-
र्वर्तन्ते ते तिलजलाञ्जलिदानयोग्याः ॥

मधुर्वसन्तः । स्मृतिलक्षणमुक्तम् ।

अपि च ।

अग्रे भृङ्गसरणिर्नयनयोस्तस्या
मध्ये पुनः क्वथितदुग्धतरङ्गमाला ।
पश्चाच्च तस्याः सरति तिर्यङ्निरीक्षितेषु
आकर्णमण्डलितचापधरोऽनङ्गः ॥

तद्वक्रनिरीक्षणादनु मदनकृतविमनस्कतावश्यं भवतीति भावः । अयं च कविनिबद्धवक्तृप्रौढोक्तिसिद्धो ध्वनिः ।

कथं चिरयति प्रियवयस्यः ।

विदूषकः—

अयि विचक्षणे, सर्वं सत्यमिदम् ।

विचक्षणा—

सर्वं सत्यतरम् ।

विदूषकः—

नाहं प्रत्येमि, यतः परिहासशीला खलु त्वम् ।

कदाचिदयमपि परिहास एव भवेदिति भावः ।

विचक्खणा—अज्ज, मा एवं भण । अण्णो वक्कहत्तिकालो, अण्णो कज्जविआरकालो ।

विदूषकः—(पुरोऽवलोक्य ।) एसो पिअवअस्सो हंसो विअ विमुक्कमाणसो, करी विअ मअक्खामो, मुणालदण्डो विअ घणघम्ममिलाणो, दिणदीओ विअ विअलिअच्छाओ, पभादपुण्णिमाचन्दो विअ पण्डुरपरिक्खीणो चिट्ठदि ।

उभे—(परिक्रम्य ।) जअदु जअदु महाराओ ।

राजा—वअस्स, कधं उण विअक्खणाए मिलिदो सि ।

विदूषकः—अज्ज विअक्खणा मए सह संधिं कादुं आअदा । किदसंधीए इमीए सह मन्तअन्तस्स एत्तिआ वेला लग्गा ।

राजा—संधिकरणस्स किं फलम् ।

---

विचक्षणा—

आर्य, मैवं भण । अन्यो वक्रोक्तिकालः, अन्यः कार्यविचारकालः ।

तथा च नेदं सर्वमसत्यमिति भावः ।

विदूषकः—

एष प्रियवयस्यो हंस इव विमुक्तमानसः, करीव मदक्षामः, मृणालदण्ड इव घनघर्मम्लानः, दिनदीप इव विगलितच्छायः, प्रभातपूर्णिमाचन्द्र इव पाण्डुरपरिक्षीणस्तिष्ठति ।

विमुक्तमानस उद्विग्नमनाः । हंसपक्षे विमुक्तं त्यक्तं मानसं सरो येनेत्यर्थः । हंसोपमानेन पाण्डुरतातिशयोऽस्य द्योत्यते । पाण्डुरश्च परिक्षीणश्चेत्यर्थः ।

उभे—

जयतु जयतु महाराजः ।

राजा—

वयस्य, कथं पुनर्विचक्षणया मिलितोऽसि ।

विदूषकः—

अद्य विचक्षणा मया सह संधिं कर्तुमागता । कृतसंध्यैतया सह मन्त्रयमाणस्यैतावती वेला लग्ना ।

राजा—

संधिकरणस्य किं फलम् ।

**विदूषकः**—एसा अहिमदजणपेसिदा लेहहत्था णं विअक्खणा आअदा।

**राजा**—(गन्धं सूचयित्वा।) केदईकुसुमगन्धो विअ आआदि।

**विचक्षणा**—केदईदललेहो एव्व एसो मह हत्थे।

**राजा**—महुसमए किं केदईकुसुमम्।

**विचक्षणा**—भैरवाणन्ददिण्णमन्तप्पहावेण देवीभवणुज्जाणे केदईलदाए एक्को दाव प्पसवो दंसिदो। तस्स ताए देवीए दलसंपुडेहिं अज्ज हिन्दोलअप्पभञ्जणीए चउत्थीए हरवल्लहा देवी अच्चिदा। अण्णं च दलसंपुडजुअलं उण कणिट्ठबहिणीआए कप्पूरमञ्जरीए प्पसादीकिदम्। तीए वि एक्केण दलसंपुडेण भअवदी गोरी ज्जेव्व अच्चिदा। अण्णं च।

केदईकुसुमपत्तसंपुडं पाहुडं तुअ सहीअ पेसिदम्।
एणणाहिमसिवण्णसोहिणा तं सिलोअजुअलेण लञ्छिदम्॥ ७॥

(इति लेखमर्पयति।)

---

विदूषकः—
एषाभिमतजनप्रेषिता लेखहस्ता ननु विचक्षणा आगता।
इदमेव संधिफलमित्याशयः।
राजा—
केतकीकुसुमगन्ध इवायाति।
विचक्षणा—
केतकीदललेख एवैष मम हस्ते।
तस्यैव गन्ध इत्याशयः।
राजा—
मधुसमये किं केतकीकुसुमम्।
विचक्षणा—
भैरवानन्ददत्तमन्त्रप्रभावेण देवीभवनोद्याने केतकीलतयैकस्तावत्प्रसवो दर्शितः। तस्य तया देव्या दलसंपुटैरद्य हिन्दोलकप्रभञ्जन्यां चतुर्थ्यां हरवल्लभा देवी अर्चिता। अन्यच्च दलसंपुटयुगलं पुनः कनिष्ठभगिन्यै कर्पूरमञ्जर्यै प्रसादीकृतम्। तयाप्येकेन दलसंपुटेन भगवती गौर्येवार्चिता। अन्यच्च।

केतकीकुसुमपत्रसंपुटं प्राभृतं तव सख्या प्रेषितम्।
एणनाभिमषीवर्णशोभिना तच्छ्लोकयुगलेन लाञ्छितम्॥

राजा—(प्रथमं वाचयति ।)

हंसिं कुङ्कुमपङ्कपिञ्जरतणुं काऊण जं वञ्चिदो
तब्भत्ता किल चक्कवाअघरिणी एसत्ति मण्णन्तओ ।
एदं तं मह दुक्किदं परिणदं दुक्खाण सिक्खावअं
एक्कत्थो वि ण जासि जेण विसअं दिट्ठीतिहाअस्स वि ॥ ८ ॥

(द्वितीयं वाचयित्वा ।) एदाइं ताइं मअणरसाअणक्खराइं ।

विचक्षणा—दुदीओ उण मए पिअसहीए अवत्थाणिवेदओ कदुअ सिलोओ लिहिदो एत्थ । तं वाचेदु महाराओ ।

राजा—(वाचयति ।)

सह दिअहणिसाइं दीहरा सासदण्डा
सह मणिवलएहिं वाहधारा गलन्ति ।
सुहअ तुअ विओए तेअ उव्वेअणीए
सह अ तणुलदाए दुब्बला जीविदासा ॥ ९ ॥

---

राजा—

हंसीं कुङ्कुमपङ्कपिञ्जरतनुं कृत्वा यद्वञ्चित-
स्तद्भर्ता किल चक्रवाकगृहिण्येषेति मन्यमानः ।
एतत्तन्मम दुष्कृतं परिणतं दुःखानां शिक्षकं
एकस्थोऽपि न यासि येन विषयं दृष्टित्रिभागस्यापि ॥

एतानि तानि मदनरसायनाक्षराणि ।

विचक्षणा—

द्वितीयः पुनर्मया प्रियसख्या अवस्थानिवेदकः कृत्वा श्लोको लिखितोऽत्र । तं वाचयतु महाराजः ।

राजा—

सह दिवसनिशाभ्यां दीर्घाः श्वासदण्डाः
सह मणिवलयैर्बाष्पधारा गलन्ति ।
सुभग तव वियोगे तस्या उद्वेगिन्याः
सह च तनुलतया दुर्बला जीविताशा ॥

श्वासदण्डा इत्यनेन निःश्वासप्राचुर्यं व्यज्यते । इयं च सहोक्तिः । तल्लक्षणमुक्तं वृत्तेः—'सहभावकथनं सहोक्तिः' इति ।

**विचक्षणा**—एत्थ जेव्व एदाए अवत्थाए मह ज्जेट्ठबहिणिआए सुलक्खणाए उग्गाविआए भविअ सिलोओ किदो, तं महाराओ सुणादु। (पठति।)

णीसासा हारलट्ठीसरिसपसरणा चन्दणं फोडकारी
चन्दो देहस्स दाहो सुमरणसरिसी हाससोहा मुहम्मि।
अङ्गाणं पण्डुभाओ दिअहससिकलाकोमलो किं च तीए
णिच्चं बाहप्पवाहा तुह सुहअ किदे होन्ति कुल्लाहिं तुल्ला॥ १०॥

**राजा**—(निःश्वस्य।) किं भणीअदि। सुकइत्तणे तुह ज्जेट्ठबहिणिआ क्खु एसा।

**विदूषकः**—एसा विअक्खणा महीअलसरस्सई। एदाए जेट्ठबहिणिआ तिहुअणसरस्सई। ता एदाहिं समं पडिसिद्धं ण करिस्सम्। किं उण पिअवअस्सपुरदो मअणावत्थं अत्तणो उचिदेहिं अक्खरेहिं णिवेदेमि।

---

**विचक्षणा**—
इहैवैतस्या अवस्थाया मम ज्येष्ठभगिन्या सुलक्षणया आदेशकारिण्या भूत्वा श्लोकः कृतः, तं महाराजः शृणोतु।

**णीसासेति**—
निःश्वासा हारयष्टिसदृशप्रसरणाश्चन्दनः स्फोटकारी
चन्द्रो देहस्य दाहः स्मरणसदृशी हासशोभा मुखे।
अङ्गानां पाण्डुभावो दिवसशशिकलाकोमलः किं च तस्या
नित्यं बाष्पप्रवाहास्तव सुभग कृते भवन्ति कुल्याभिस्तुल्याः॥

स्मरणसदृशी तदभिव्यञ्जिकेत्यर्थः। दिवसशशिकलासाम्येन निष्प्रभत्वमङ्गानामभिव्यज्यते।

**राजा**—
किं भण्यते। सुकवित्वे तव ज्येष्ठभगिनिका खल्वेषा।

**विदूषकः**—
एषा विचक्षणा महीतलसरस्वती। एतस्या ज्येष्ठभगिनिका त्रिभुवनसरस्वती। तदेताभ्यां समं प्रतिस्पर्धां न करिष्यामि। किं पुनः प्रियवयस्यपुरतो मदनावस्थामात्मन उचितैरक्षरैर्निवेदयामि।

राजा—पढ। एदं पि सुणीअदि।

विदूषकः—

परं जोह्ना उह्ना गरलसरिसो चन्दणरसो
खदक्खारो हारो रअणिपवणा देहतवणा।
मुणाली बाणाली जलदि अ जलद्दा तणुलदा
वरिट्ठा जं दिट्ठा कमलवअणा सा सुणअणा॥ ११॥

राजा—वअस्स, तुमं पि थोएण चन्दणरसेण समालहिस्ससि। ता कहेहि तग्गदं किंपि वुत्तन्तम्। अघ अन्तेउरं णइअ देवीए किं कदं तीस।

विदूषकः—विअक्खणे, किं कदं कहेहि।

विचक्खणा—देव, मण्डिदा टिक्किदा भूसिदा तोसिदा अ।

---

मदनावस्थामित्यनन्तरं तस्या इति शेषः।

राजा—

पठ। एतदपि श्रूयते।

विदूषकः—

परं ज्योत्स्ना उष्णा गरलसदृशश्चन्दनरसः
क्षतक्षारो हारो रजनिपवना देहतपनाः।
मृणाली बाणाली ज्वलति च जलार्द्रा तनुलता
वरिष्ठा यद्दृष्टा कमलवदना सा सुनयना॥

क्षते क्षार इवेत्यर्थः। तस्यात्यन्तदुःसहत्वात्। रजनिपवना इत्यनेन तेषामतिशीतलत्वं व्यञ्जयम्। देहे तपना इवेत्यर्थः। अत्यन्तदाहकत्वात्। बाणालीवेत्यर्थः। अत्यन्तखेदप्रदत्वात्। अत्रोपमोत्प्रेक्षारूपकादयोऽर्थालंकाराः। च्छेकलाटानुप्रासादयश्च शब्दालंकारा ऊह्याः। तल्लक्षणं चोक्तं प्राक्।

राजा—

वयस्य, त्वमपि स्तोकेन चन्दनरसेन समालभ्यसे। तत्कथय तद्गतं किमपि वृत्तान्तम्। अथान्तःपुरं नीत्वा देव्या किं कृतं तस्याः।

विदूषकः—

विचक्षणे, किं कृतं कथय।

विचक्षणा—

देव, मण्डिता तिलकिता भूषिता तोषिता च।

राजा—कथं विअ ।

विचक्षणा—

घणमुव्वट्टिदमङ्गं कुङ्कुमरसपङ्कपिञ्जरं तिस्सा ।

राजा—

रोसाअणं कुडं ता कञ्चणमअवालिआरूवम् ॥ १२ ॥

विचक्षणा—

मरगअमञ्जीरजुअं चरणे से लम्भिआ वअस्साहिं ।

राजा—

भमिअमहोमुहपङ्कअजुअलं ता भमरमालाए ॥ १३ ॥

विचक्षणा—

राअसुअपिच्छणीलं पट्टंसुअजुअलअं णिअसिदा सा ।

---

राजा—

कथमिव ।

विचक्षणा—

घनमुद्वर्तितमङ्गं कुङ्कुमरसपङ्कपिञ्जरं तस्याः ।

राजा—

उज्ज्वलीकृतं तत्काञ्चनमयबालिकारूपम् ॥

रोसाअणमित्युज्ज्वलार्थे देशी । काञ्चनमयेत्यस्य प्रकृतिपीतमेव तद्रूपमिदानीं पीततरेण कुङ्कुमेनोद्वर्तनाच्छोभातिशयो जात इति भावः ।

विचक्षणा—

मरकतमञ्जीरयुगं चरणावस्या लम्भितौ वयस्याभिः ।

राजा—

भ्रमितमधो मुखपङ्कजयुगलं तद्भ्रमरमालया ॥

अस्याश्चरणौ मरकतमञ्जीरयुगं मरकतनूपुरयुगलं लम्भितौ प्रापितौ । तत्संबद्धौ कृताविति यावत् । भ्रमितेत्यादिना तच्चरणयुगलस्य पङ्कजयुगेन मञ्जीरयुगलस्य च भ्रमरमालया साम्यं प्रक

विचक्षणा—न्वसोपरि वर्तते मध्ये कृष्णसार

राजशुकपिच्छ[illegible]यं वदनस्य कृष्णमृगसाम्यं चालकमालाना

राजा—

कअलीकन्दलिआ ता खरपवणविलोलिअदलग्गा ॥ १४ ॥

विचक्षणा—

तीए णिअम्बफलए णिवेसिआ पउमराअमणिकञ्ची ।

राजा—

कञ्चणसेलसिलाए ता बरिही कारिओ णच्चम् ॥ १५ ॥

विचक्षणा—

दिण्णा वलआवलिओ करकमलपउट्ठणालजुअलम्मि ।

राजा—

ता भण कधं ण सोहइ विपरीअं मअणतूणीरम् ॥ १६ ॥

विचक्षणा—

कण्ठम्मि तीअ ठविदो छम्मासिअमोत्तिआण वरहारो ।

राजा—

सेवइ ता पन्तीहिं मुहचन्दं तारआणिअरो ॥ १७ ॥

---

राजा—

कदलीकन्दली तत्खरपवनविलोलितदलाग्रा ॥

एतावता तदूर्वोः कदलीकन्दल्या वसनस्य च तद्दलानां साम्यमुक्तम् ।

विचक्षणा—

तस्या नितम्बफलके निवेशिता पद्मरागमणिकाञ्ची ।

राजा—

काञ्चनशैलशिलायां तद्बर्ही कारितो नृत्यम् ॥

अनेन नितम्बस्य पीवरत्वेन काञ्चनशिलासाम्यं काञ्च्याश्च बर्हिसाम्यं प्रकाशितम् ।

विचक्षणा—

दत्ता वलयावल्यः करकमलप्रकोष्ठनालयुगे ।

राजा—

तद्भण कथं न शोभते विपरीतं मदनतूणीरम् ॥

विचक्षणा—

कण्ठे तस्याः स्थापितः षाण्मासिकमौ[illegible]

कजलं तस्या योग्यं

राजा—

सेवते तत्पङ्क्तिभि[illegible]कलशिनी शोभते तस्या हारः ।

विचक्षणा—

उभएसु वि सवणेसुं णिवेसिअं रअणकुण्डलजुअं से ।

राजा—

ता वअणमम्महरहो दोहिँ वि चक्केहिँ चङ्कमिदो ॥ १८ ॥

विचक्षणा—

जच्चञ्जणजणिदपसाहणाइँ जादाइँ तीअ णअणाइं ।

राजा—

उप्पुङ्खिअ णवकुवलअसिलीमुहे पञ्चबाणस्स ॥ १९ ॥

विचक्षणा—

कुडिलालआणँ माला ललाडफलअग्गसङ्गिणी रइदा ।

राजा—

ता ससिबिम्बस्सोवरि वट्टइ मज्झम्मि किसणसारङ्गो ॥ २० ॥

---

तारकानिकरः पङ्क्तिभिः श्रेणीभिः कृत्वा मुखचन्द्रं सेवते तदित्यन्वयः । तथा च मुक्ताहारस्य तारकानिकरोपमा व्यज्यते ।

विचक्षणा—

उभयोरपि श्रवणयोर्निवेशितं रत्नकुण्डलयुगं तस्याः ।

राजा—

तद्वदनमन्मथरथो द्वाभ्यामिव चक्राभ्यां चङ्कमितः ॥

चङ्कमितो युक्त इत्यर्थः । अत्र कुण्डलयुगलस्य चक्रद्वयसाम्यं द्योत्यते ।

विचक्षणा—

जात्याञ्जनजनितप्रसाधने जाते तस्या नयने ।

राजा—

उत्पुङ्खितौ नवकुवलयशिलीमुखौ पञ्चबाणस्य ॥

अत्रापि नयनयोर्नवकुवलयसाम्यमञ्जनस्य च भ्रमरसाम्यं ज्ञाप्यते । शिलीमुखाविव शिलीमुखाविति रूपकेण च कामिविह्वलविधानसामर्थ्यं स्मरशरधर्मैस्तत्राभिव्यज्यते । तीक्ष्णत्वं च नेत्रयोर्व्यङ्ग्यम् । उत्पुङ्खितौ सज्जितौ ।

विचक्षणा—

कुटिलालकानां माला ललाटफलकाग्रसङ्गिनी रचिता ।

[illegible]

[illegible]म्बस्योपरि वर्तते मध्ये कृष्णसार[illegible]ः ॥

[illegible]यं वदनस्य कृष्णमृगसाम्यं चालकमाला[illegible]सनेनोक्तम् ।

विचक्षणा—

घणसारतारणअणाइ गूढकुसुमोच्चओ चिउरभारो ।

राजा—

ससिराहुमल्लजुज्झं विअ दंसिअमेणणअणाए ॥ २१ ॥

विचक्षणा—

इअ देवीअ जहिच्छं पसाहणेहिं प्पसाहिदा कुमरी ।

राजा—

ता केलिकाणणमही विहूसिआ सुरहिलच्छीए ॥ २२ ॥

विदूषकः—देव, एदं परमत्थं विण्णवीअदि ।

जेस्सा दिट्ठी तरलधवला कज्जलं तीअ जोग्गं
जा वित्थिण्णत्थणकलसिणी रेहए तीअ हारो ।
चक्काआरे रमणफलहे को वि कञ्चीमरट्टो
जिस्सा तिस्सा उण वि भणिमो भूसणं दूसणं अ ॥ २३ ॥

---

विचक्षणा—

घनसारतारनयनाया गूढकुसुमोच्चयश्चिकुरभारः ।

राजा—

शशिराहुमल्लयुद्धमिव दर्शितमेणनयनायाम् ॥

कुसुमनिचयस्य चन्द्रसादृश्यम्, चिकुरकलापस्य च राहुसाम्यमभिव्यक्तीकृतम् । मल्लयुद्धमित्यनेन तयोः समबलत्वं तेन च तुल्यशोभत्वं ध्वन्यते ।

विचक्षणा—

इति देव्या यथेच्छं प्रसाधनैः प्रसाधिता कुमारी ।

राजा—

तत्केलिकाननमही विभूषिता सुरभिलक्ष्म्या ॥

केलीनां क्रीडानां काननं समूहस्तत्संबन्धिनी मही उत्पत्तिस्थानम् । तत्साम्यं कुमार्यां वसन्तलक्ष्मीसाम्यं देव्या अनेन प्रकटितम् ।

विदूषकः—

देव एतत्परमार्थं विज्ञाप्यते ।
यस्या दृष्टिस्तरलधवला कज्जलं तस्या योग्यं
या विस्तीर्णस्तनकलशिनी शोभते तस्या हारः ।

राजा—(पुनस्तामनुसंधाय ।)

तिवलिवलिअणाहीबाहुमूलेसु लग्गं
थणकलसणिअम्बाडम्बरेसूससन्तम् ।
जलणिविडमिमीए सिक्कणं ह्णाणपोत्तं
पिसुणदि तणुलट्ठीचङ्गिमं लङ्गिमं अ ॥ २४ ॥

विदूषकः—(सक्रोधमिव ।) भो, मए सव्वालंकारसहिदा वण्णिदा । तुमं उण जलविलुत्तपसाहणं जेव सुमरसि । ता किं ण सुदं देवेण ।

णिसग्गचङ्गस्स वि माणुसस्स सोहा समुम्मीलदि भूसणेहिं ।
मणीणँ जच्चाणँ वि कञ्चणेहिं विहूसणे सज्जदि कावि लच्छी ॥ २५ ॥

---

चक्राकारे रमणफलके कोऽपि काञ्च्याडम्बरो
यस्मात्तस्याः पुनरपि भणामो भूषणं दूषणं च ॥

यद्येतादृशं दृश्यादि कान्तायास्तिष्ठति तदा भूषणाभावेऽपि शोभाविशेषः स्वाभाविकोऽस्त्यभावत एवेति नातिप्रयोजनवत्त्वाद्भूषणमपि दूषणमिव भवतीति दूषणभूषणयोः प्रयोजनाभावत्वेन साम्यम् । अथवा दूषणं भूषणमिव भवति । अयमर्थः—एतादृशदृश्यादिमत्या असमीचीनवस्तुसंबन्धोऽपि भूषणतुल्य एव भवति । शोभाहतिकरत्वाभावात् । अत एव कविचूडामणिना भगवता कालिदासेनापि वर्णितम्—'किमिव हि मधुराणां मण्डनं नाकृतीनाम्' इति ।

राजा—

त्रिवलिललितनाभीबाहुमूलेषु लग्नं
स्तनकलशनितम्बाडम्बरेषूच्छ्वसत् ।
जलनिबिडमेतस्याः श्लक्ष्णं स्नानवस्त्रं
पिशुनयति तनुयष्टिचङ्गिमानं तारुण्यं च ॥

चङ्गिमं तारुण्यमिति देशी ।

विदूषकः—

भोः, मया सर्वालंकारसहिता वर्णिता । त्वं पुनर्जलविलुप्तप्रसाधनामेव स्मरसि । तर्त्किं न श्रुतं देवेन ।

निसर्गचङ्गस्यापि मानुषस्य शोभा समुन्मीलति भूषणैः ।
मणीनां जात्यानामपि काञ्चनैर्विभूषणे सज्जति कापि लक्ष्मीः ॥

राजा—

मुद्धाणँ णाम हिअआइँ हरन्ति हन्त
णेवच्छकप्पणगुणेण णिअम्बिणीओ ।
छेआ पुणो पकिदिचब्भिमरमणिज्जा
दक्खारसो ण महुरिज्जइ सक्कराए ॥ २६ ॥

विचक्षणा—जधा देवेणादिट्ठम् ।

थोआणं थणआणँ कण्णकलिआलच्छीणँ अच्छीणँ वा
भूचन्दस्स मुहस्स कन्तिसरिआसोत्तस्स गत्तस्स अ ।
को णेवच्छकलाअ कीरदि गुणो जं तं पि सव्वं पिअं
संजुत्तं सुणु तत्थ कारणमिणं रूढीअ का खण्डणा ॥ २७ ॥

राजा—(विदूषकमुद्दिश्य ।) सुपङ्गल कविञ्जल, एस सिक्खावीअसि ।

---

राजा—

मुग्धानां नाम हृदयानि हरन्ति हन्त
नेपथ्यकल्पनगुणेन नितम्बिन्यः ।
छेकाः पुनः प्रकृतिविभ्रमरमणीया
द्राक्षारसो न मधुरीयति शर्करया ॥

येषां हृदयानि नेपथ्यकल्पनगुणेन नितम्बिन्यो हरन्ति ते मुग्धा अविदग्धा एवेत्याशयः । ये पुनः प्रकृत्या स्वभावेन यथाविभ्रमा सौन्दर्यं यासां नितम्बिनीनां ता आद्रियन्ते त एव विदग्धा इति भावः । द्राक्षारससाम्यं स्वभावसौन्दर्यस्य, शर्करासाम्यं भूषणानामुपदर्शितम् ।

विचक्षणा—
यथा देवेनादिष्टम् ।

स्थूलानां स्तनानां कर्णकलिकालक्ष्मीरक्ष्णोर्वा
भ्रूचन्द्रस्य मुखस्य कान्तिसरित्स्रोतसो गात्रस्य च ।
को नेपथ्यकलाभिः क्रियते गुणो यत्तदपि सर्वं प्रियं
संयुक्तं शृणु तत्र कारणमिदं रूढेः का खण्डना ॥

कविर्यो[illegible]हरतीति यथा [illegible]पेक्षया प्राकृतं तथा सहज[illegible]तीति भावः ।

राजा—
सुप्राङ्गल कपिञ्जल, एष शिक्ष्यसे ।

किं कज्जं कित्तिमेण विरअणविहिणा सो णडीणं विडम्बो
तं चङ्गं जं णिअङ्गं जणमणहरणं तेण सीमन्तिणीओ ।
जस्सिं सव्वङ्गसङ्गो सउलगुणगणो सो अदम्भो अलम्भो
तस्सिं णेच्छन्ति काले परमसुहअरे किं पि णेवच्छलच्छीम् ॥२८॥

विचक्षणा—देव, एदं विण्णवीअदि—ण केवलं देवीए णिओएण तिस्सा अणुगदह्मि । तारामेत्तीए वि सहित्तणं पत्ता कप्पूरमञ्जरीए । तेण तक्कज्जसज्जा अहं पुणो वि ओलग्गाविअ भविअ णिवेदइस्सम् ।

---

मुखाञ्चलः मुखरलः । तथा च चातुर्यलेशोऽपि तव नास्तीति भावः ।

किं कार्यं कृत्रिमेण विरचनविधिना स नटीनां विडम्ब-
स्तच्चङ्गं यन्निजाङ्गं जनमनोहरणं तेन सीमन्तिन्याः ।
यस्मिन्सर्वाङ्गसङ्गः सकलगुणगणः सोऽदम्भोऽलभ्य-
स्तस्मिन्नेच्छन्ति काले परमसुखकरे कामपि नेपथ्यलक्ष्मीम् ॥

कृत्रिमभूषाभिर्नटीनामेवापाततः सौन्दर्यमुल्लसति न पुनः सीमन्तिनीनामित्यर्थः । यच्चङ्गं समीचीनं तदेव निजाङ्गं स्वस्याङ्गमाह्लादकमित्याह्लादकत्वविशिष्टाङ्गेऽङ्गमात्रवाचकाङ्गपदवाच्यसंक्रमादयमर्थान्तरसंक्रमितवाच्यो लक्षणामूलो ध्वनिः । तेन स्वाभाविकाङ्गसौन्दर्येणैव सीमन्तिन्यः कुलाङ्गना जनमनोहरणं भवन्तीत्यर्थः । यद्यपि जनमनोहरणमिति भिन्नलिङ्गवचनं पदं न सीमन्तिन्य इति पदस्य विशेषणत्वमर्हति, तथापि वस्तुपदाध्याहारेण योज्यम् । तस्य चाजहल्लिङ्गत्वान्न दोष इति ध्येयम् । अथवा जनमनोहरणमिति काकाक्षिगोलकन्यायेनोभयत्र संबध्यते । तथा च यन्निजाङ्गं स्वाभाविकाङ्गं चङ्गं तदेव जनमनोहरणं भवतीत्यर्थः । यदा पूर्वत्रैव संबध्यते तदा च तेन स्वाभाविकाङ्गचङ्गत्वेनैव सीमन्तिन्यो भवन्ति । तासामुत्तमसीमन्तिनीत्वं भवतीत्यर्थः । तथा च सीमन्तिनीपदवाच्यस्यैवोत्तमत्वविशिष्टे तस्मिन्संक्रमादत्राप्यर्थान्तरसंक्रमितवाच्यो ध्वनिः । यस्मिन्काले सकलः संपूर्णो गुणानां गणः समूहः सर्वाङ्गसङ्गः सर्वेष्वङ्गेषु सङ्गो यस्य तादृशः, अदम्भः न विद्यते दम्भो यत्रासावदम्भः स्वाभाविकः, अलभ्योऽप्राप्योऽस्ति, अथ च तस्मिन्काले सुखकरे कामपि नेपथ्यलक्ष्मीं नेच्छन्ति । विदग्धा इति शेषः । निजाङ्गमित्येकवचनेनैकमपि स्वाभाविकसुन्दरमङ्गं लोकहृदयहरणसमर्थं किमुत सर्वाङ्गाणीति ध्वन्यते । अत्र च नटीसीमन्तिन्योर्व्यतिरेकालंकारो व्यङ्ग्यः । छेकवृत्त्यनुप्रासालंकारावप्यत्र बोध्यौ । तल्लक्षणं प्रागेवोक्तम् ।

विचक्षणा—

देव, एतद्विज्ञाप्यते—न केवलं देव्या नियोगेन तस्या अनुगतास्मि । तारामैत्र्यापि सखीत्वं प्राप्ता कर्पूरमञ्जर्याः । तेन तत्कार्यासक्ताहं पुनरपि सेवकीभूय निवेदयिष्यामि ।

तिस्सा दाव परिक्खणत्थ णिहिदो हत्थो थणुत्थङ्गदो
डाहुड्डामरिदो सहीहिँ बहुसो हेलाअ कड्ढिज्जदि ।
किं तेणावि इमं णिसामअ गिरं संतोसिणिं तासिणिं
हत्थच्छत्तणिवारिदेन्दुकिरणा बोलेइ सा जामिणीम् ॥ २९ ॥

कज्जसेसं कविञ्जलो णिवेदइस्सदि । तं च देवेण तधा कादव्वम् । (इति परिक्रम्य निष्क्रान्ता ।)

राजा—वअस्स, किं उण तं कज्जसेसम् ।

विदूषकः—अज्ज हिन्दोलणचउत्थी तहिं देवीए गोरीं कदुअ कप्पूरमञ्जरीं हिन्दोलए आरोहइदव्वा । ता मरगअपुञ्जट्ठिदेण देवेण कप्पूरमञ्जरी हिन्दोलन्ती दट्ठव्वा । एदं तं कज्जसेसम् । (विचिन्त्य ।) ता अदिणिउणा वि छलिदा देवी । पाइआ जुण्णमज्जारिआ दुद्धं त्ति तक्कम् ।

---

तस्यास्तावत्परीक्षणाय निहितो हस्तः स्तनोत्सङ्गतो
दाहोड्डामरितः सखीभिर्बहुशो हेलया कृष्यते ।
किं तेनापीमां निशामय गिरं संतोषिणीं त्रासिनीं
हस्तच्छत्रनिवारितेन्दुकिरणातिवाहयति सा यामिनीम् ॥

हेलयावज्ञया कृष्यते तयेति शेषः । स्वसंबन्धिविरहार्तिभाजनत्वेन । त्रासिनीमिति चैतादृशदुःसहवियोगपीडितापि स्वहस्तेनैवेन्दुकरानिवारयतीति तेषां हस्तस्पर्शेऽशङ्कनीयमपि मरणादिकं संभाव्यत इति त्रासकरत्वम् । अथवा बलात्कारेण यथेन्दुकिरणस्पर्शो भवति तथा विधत्त इत्यतिदुष्करमिति त्रासकारणं ज्ञेयम् । यद्वा हस्तच्छत्रेत्यनेन हस्तस्य संपूर्णशरीरे चन्द्रकरस्पर्शनिवारकत्वासंभवाद्धस्तानवच्छन्नप्रदेशे शशिकरस्पर्शोऽवश्यंभावस्तत्कारणं वेदितव्यः । अनेन विधानं नाम मुखसंध्यङ्गमुक्तम् । तल्लक्षणं दशरूपके—'विधानं सुखदुःखकृत्' इति । अत्रापि रूपकच्छेकानुप्रासादयः शब्दार्थालंकारा ऊह्याः । लक्षणं तूक्तम् ।

कार्यशेषं कपिञ्जलो निवेदयिष्यति । तच्च देवेन तथा कर्तव्यम् ।

कपिञ्जलो विदूषकः ।

राजा—

वयस्य, किं पुनस्तत्कार्यशेषम् ।

विदूषकः—

अद्य हिन्दोलनचतुर्थी । तत्र देव्या गौरीं कृत्वा कर्पूरमञ्जरी हिन्दोलके आरोहयितव्या । तन्मरकतपुञ्जस्थितेन देवेन कर्पूरमञ्जरी हिन्दोलन्ती द्रष्-

राजा—को अण्णो तुम्हाहिन्तो मह कज्जसज्जो । को अण्णो चन्दा-हिन्तो समुद्दवड्ढणणिट्ठो ।

(इति परिक्रम्य कदलीगृहप्रवेशं नाटयतः ।)

विदूषकः—इअं उत्तुङ्गफलिहमणिवेदिआ । ता इह उपविसदु पिअ-वअस्सो ।

(राजा तथा करोति ।)

विदूषकः—(हस्तमुद्यम्य ।) भो, दीसदु पुण्णिमाअन्दो ।

राजा—(विलोक्य ।) अए, दोलारूढाए मह वल्लहाए वअणं पुण्णिमा-चन्दो त्ति णिद्दिससि । (समन्तादवलोक्य ।)

विच्छाअन्तो णअररमणीमण्डलस्साणणाइं
पच्छालन्तो गगणकुहरं कन्तिजोह्वाजलेण ।
पेच्छन्तीणं हिअअणिहिदं णिद्दलन्तो अ दप्पं
दोलालीलासरलतरलो दीसए से मुहेन्दू ॥ २० ॥

---

व्या । एतत्तत्कार्यशेषम् । तदतिनिपुणापि च्छलिता देवी । पायिता जीर्णमार्जारिका दुग्धमिति तर्कम् ।

मरकतपुञ्जः प्रासादविशेषः ।

राजा—
कोऽन्यो युष्मत्तो मम कार्यसज्जः । कोऽन्यश्चन्द्रतः समुद्रवर्धननिष्ठः ।

विदूषकः—
इयमुत्तुङ्गस्फटिकमणिवेदिका । तदिहोपविशतु प्रियवयस्यः ।

विदूषकः—
भोः, दृश्यतां पूर्णिमाचन्द्रः ।

राजा—
अए, दोलारूढाया मम वल्लभाया वदनं पूर्णिमाचन्द्र इति निर्दिशसि ।

विच्छाययन्नगररमणीमण्डलस्याननानि
प्रक्षालयन्गगनकुहरं कान्तिज्योत्स्नाजलेन ।
प्रेक्षमाणानां हृदयनिहितं निर्दलयंश्च दर्पं
दोलालीलासरलतरलो दृश्यतेऽस्या मुखेन्दुः ॥

अवि अ ।

उच्चेहिं गोउरेहिं धवलधअवडाडम्बरिल्लावलीहिं
घण्टाहिं विन्दुरिल्लसुरतरुणिविमाणाणुरूअं वहन्ती ।
पाआरं लङ्घअन्ती कुणइ रअवसादुण्णमन्ती णमन्ती
एन्ती जन्ती अ दोला जणमणहरणं कड्ढणुकड्ढणेहिं ॥ २१ ॥

अवि अ ।

रणन्तमणिणेउरं झणझणन्तहारच्छडं
कलक्कणिदकिङ्किणीमुहरमेहलाडम्बरम् ।
विलोलवलआवलीजणिदमञ्जुसिञ्जारवं
ण कस्स मणमोहणं ससिमुहीअ हिन्दोलणम् ॥ २२ ॥

---

विच्छाययन्विगतच्छायानि कुर्वन् । म्लानीकुर्वन्नित्यर्थः । कान्तिरेव ज्योत्स्ना चन्द्रिका तस्या बलं चाकचक्यं तेन गगनं खमेव कुहरं क्षालयन्प्रकाशयन् । जलेन क्षालनानुचितमेवेति भावः । तरलतरल इत्यान्दोलनवशाद्यातायातमाचरन्नित्यर्थः । अत्र रूपकच्छेकावृत्त्यनुप्रासरूपाः शब्दार्थालंकारा विभाव्याः । स्पष्टमन्यत् ।

अपि च ।

उच्चेषु गोपुरेषु धवलध्वजपटाडम्बरबहलावलीषु
घण्टाभिर्विद्राणसुरतरुणिविमानानुरूपं वहन्ती ।
प्राकारं लङ्घयन्ती करोति रयवशादुन्नमन्ती नमन्ती
आयान्ती यान्ती च दोला जनमनोहरणं कर्षणोत्कर्षणैः ॥

धवलध्वजपटाडम्बराणां बहुला आवल्यो येषु तादृशेषु गोपुरेषु पुरद्वारेषु घण्टाभिरुपलक्षितं विद्राणं वेगेन गच्छत्सुरतरुणिविमानं देवाङ्गनाविमानं तदनुरूपं तत्तुल्यं प्राकारं वहन्ती बिभ्राणा । कर्षणोत्कर्षणैः रयवशाल्लङ्घयन्ती । सरलगमनादुन्नमन्ती ऊर्ध्वं गच्छन्ती नमन्ती पुनरधो यान्ती आयान्ती यान्ती चेयं दोला कस्य कामिनो मनोहरणं न करोति । अपि तु सर्वस्य विधत्त इति काकर्थः । इयं च दोलास्वरूपवर्णनाज्जातिः । तल्लक्षणं काव्यादर्शे दण्डिनोक्तम्—'नानावस्थं पदार्थानां रूपं साक्षाद्विवृण्वती । स्वभावोक्तिश्च जातिश्चेत्याद्या सालंकृतिर्यथा ॥' इति । उपमानुप्रासादयोऽन्येऽप्यलंकारा ज्ञेयाः ।

अपि च ।

रणन्मणिनूपुरं झणझणायमानहारच्छटं
कलक्वणितकिङ्किणीमुखरमेखलाडम्बरम् ।

विदूषकः—भो, सुत्तआरो तुमम् । अहं उण वित्तिआरो भविअ वित्थरेण वण्णेमि ।

उवरिट्ठिअथणपब्भारपीडिअं चरणपङ्कजजुअं से ।
पुक्कारइ व मअणं रणन्तमणिणेउररवेण ॥ ३३ ॥
हिन्दोलणलीलाललणलम्पडं चक्कवक्कलं रमणम् ।
किलकिलइ व सहरिसं कञ्चीमणिकिङ्किणिरवेण ॥ ३४ ॥
दोलन्दोलणलीलासरन्तसरिआछलेण से हारो ।
वित्थारइ व कुसुमाउहणरवइणोइ कित्तिवल्लीओ ॥ ३५ ॥

---

विलोलवलयावलीजनितमञ्जुशिञ्जारवं
न कस्य मनोमोहनं शशिमुख्या हिन्दोलनम् ॥

शशिमुख्या हिन्दोलनं कस्य कामिनो मनोमोहनं न । मनो मानसं मोहयति यदेताहशं न । अपि तु सर्वस्यापीति काकुः । किंभूतम् । रणन्तो मणयो ययोस्ते रणन्मणी, रणन्मणी नूपुरे यत्र तत् । झणझणायमाना हारच्छटा यत्र । इत्यादीनामान्दोलनविशेषणत्वम् । अथवा क्रियाविशेषणानि । यद्वा शशिमुख्या रणन्नूपुरादिकस्य मनोमोहनं नेति प्रत्येकमेव विधिः । तदा दोलनांशे प्रत्यक्षमन्यांशे स्मरणम् । 'रण शब्दे' । झणझणायमानमित्यादि शब्दानुकरणम् । अत्राप्यनुप्रासजात्याद्याः शब्दार्थालंकारा ज्ञेयाः ।

विदूषकः—

भोः, सूत्रकारस्त्वम् । अहं पुनर्वृत्तिकारो भूत्वा विस्तरेण वर्णयामि ।

सूचनाद्धि सूत्रत्वं भवतीति भावः । अत एव तल्लक्षणमुक्तमभियुक्तैः—'अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥' इति ।

उपरिस्थितस्तनप्राग्भारपीडितं चरणपङ्कजयुगं तस्याः ।
पूत्कारयतीव मदनं रणन्मणिनूपुररवेण ॥

एतन्मणिनूपुररवश्रवणसमकालमेव कामिनां मदनकृता मनोविह्वलता भवतीति भावः । अत्रापि जात्युत्प्रेक्षे अलंकारौ ।

हिन्दोलनलीलाललनलम्पटं चक्रवर्तुलं रमणम् ।
किलकिलायतीव सहर्षं काञ्चीमणिकिङ्किणिरवेण ॥

अत्रापि किलकिलायतीति शब्दानुकरणम् । रमणं जघनम् ।

दोलान्दोलनलीलासरत्सरिकाछलेनास्या हारः ।
विस्तारयतीव कुसुमायुधनरपतेः कीर्तिवल्लीः ॥

सरिका मुक्तापङ्क्तिः । अत्रोत्प्रेक्षालंकारः ।

संमुहपवणपणोल्लिअवरिल्ल दरदाविआइँ अङ्गाइँ ।
हक्कारिऊण मअणं पासम्मि णिवेसअन्ति व ॥ ३६ ॥
ताडङ्कजुअं गण्डेसु बहलघुसिणेसु घडणलीलाहिं ।
देइ व दोलन्दोलणरेहाओ गणणकोडेण ॥ ३७ ॥
णअणाइँ पसइसरिसाइँ झत्ति फुल्लाइँ कोदुहल्लेण ।
अप्पेन्तिअ व कुवलअसिलीमुहे पञ्चबाणस्स ॥ ३८ ॥
दोलारअविच्छेओ कहं वि मा होउ इत्ति पडइ व ।
पुट्ठम्मि वेणिदण्डो मम्महचम्मट्ठिआअन्तो ॥ ३९ ॥
इअ एआइँ विलासुज्जलाइँ दोलाप्पवञ्चचरिआइं ।
कस्स ण लिहेइ चित्ते णिउणो कन्दप्पचित्तअरो ॥ ४० ॥

---

संमुखपवनप्रेरितोपरिवस्त्रे दरदर्शितान्यङ्गानि ।
आकार्य मदनं पार्श्वे निवेशयन्तीव ॥

अत्रापि स एवालंकारः ।

ताटङ्कयुगं गण्डयोर्बहलघुसृणयोर्घटनलीलाभिः ।
ददातीव दोलान्दोलनरेखा गणनकौतुकेन ॥

अत्राप्युत्प्रेक्षालंकारः ।

नयने प्रसृतिसदृशे झटिति फुल्ले कौतूहलेन ।
अर्पयत इव कुवलयशिलीमुखे पञ्चबाणस्य ॥

कुवलये एव शिलीमुखौ शरौ । कुसुमशरत्वात्तस्येति भावः । रूपकमुत्प्रेक्षा चालंकारः । तल्लक्षणं तु पूर्वोक्तमेव ।

दोलारसविच्छेदः कथमपि मा भवत्विति पततीव ।
पृष्ठे वेणिदण्डो मन्मथचर्मयष्टिकायमानः ॥

अत्रापि रूपकोत्प्रेक्षे ।

इत्येतानि विलासोज्ज्वलानि दोलाप्रपञ्चचरितानि ।
कस्य न लिखति चित्ते निपुणः कंदर्पचित्रकरः ॥

इत्यमुना प्रकारेणैतानि दोलाप्रपञ्चचरितानि कर्मभूतानि कंदर्पचित्रकरः कर्ता कस्य कामिनश्चित्ते न लिखति । अपि तु सर्वस्यापीत्यर्थः । किंभूतानि । विलासा उज्ज्वला शुचयो येषु तानि । विलास उज्ज्वलश्च येषु तनीति वा । 'शृङ्गारः शुचिरुज्ज्वलः' इति कोशात् । अत्र रूपकम् ।

राजा—(सविषादम् ।) कथमवइण्णा कप्पूरमञ्जरी । रित्ता दोला, रित्तं अ मज्झ चित्तम्, रित्ताइं दंसणुस्सुआइं मज्झ णअणाइं ।

विदूषकः—ता विज्जुलेहा विअ खणदिट्ठणट्ठा ।

राजा—मा एवं भण । हरिअन्दपुरी विअ दिट्ठा पणट्ठा अ । (स्मृतिनाटितकेन ।)

मञ्जिट्ठी ओट्ठमुद्दा णवघडणसुवण्णुज्जला अङ्गलट्ठी
　दिट्ठी बालेन्दुलेहाधवलिमजइणी कुन्तला कज्जलाहा ।
इत्थं वण्णाणँ रेहा विहरइ हरिणीचञ्चलच्छी अ एसा
　कन्दप्पो दीहदप्पी जुअजणजअणे पुण्णलक्खो वि भादि ॥ ४१ ॥

---

राजा—
कथमवतीर्णा कर्पूरमञ्जरी । रिक्ता दोला, रिक्तं च मम चित्तम्, रिक्तानि दर्शनोत्सुकानि मम नयनानि ।

विदूषकः—
तद्विद्युल्लेखेव क्षणदृष्टनष्टा ।

राजा—
मैवं भण । हरिश्चन्द्रपुरीव दृष्टा प्रणष्टा च ।

स्मृतीति । स्मृतिलक्षणमुक्तं प्राक् ।

मञ्जिट्ठीति ।

माञ्जिष्ठी ओष्ठमुद्रा नवघटनसुवर्णोज्ज्वलाङ्गयष्टि-
　र्दृष्टिर्बालेन्दुरेखाधवलिमजयिनी कुन्तलाः कज्जलाभाः ।
इत्थं वर्णानां रेखा विहरति हरिणीचञ्चलाक्षी चैषा
　कंदर्पो दीर्घदर्पी युवजनजये पूर्णलक्ष इव भाति ॥

माञ्जिष्ठीत्यनेन मञ्जिष्ठनिष्ठरक्ततातिशयवत्त्वमोष्ठमुद्रायां ध्वन्यते । नवा घटना यस्येति बहुव्रीहिः । तथा च तादृशस्वर्णनिरूपितचाकचक्यातिशयवत्त्वमङ्गेषु व्यज्यते । यष्टिरूपकेण च तन्निष्ठाधिककृशत्वमङ्गेषु द्योत्यते । इन्दुरेखेत्यनेन चाकलङ्कित्वं ज्ञाप्यते । कज्जलाभा इत्यनेन कज्जलनिष्ठनीलिमातिशयवत्त्वं कुन्तलेष्वभिव्यज्यते । अथवा कज्जले आभा येषामिति विपर्यासोपमा । तल्लक्षणं काव्यादर्शे दण्डिनोक्तम्—'सा प्रसिद्धिविपर्यासाद्विपर्यासोपमेष्यते ।' इति । इत्थमनिर्वचनीयाः । रेखापदेन चोत्कारव्यपताद्विशयविशेषो लक्ष्यते । दीर्घो दर्पोऽस्यास्तीति दीर्घदर्पी । अनेन च लक्ष्यस्वाधीनीकरणे क्लेशलेशस्याप्यभावादर्वकणोऽपि न क्षीण इति भावः । पूर्णलक्ष्यत्वं स्वाधीनं चापलक्ष्यत्वमेव । अत्रापि रूपकोपमोत्प्रेक्षानुप्रासलक्षणाः शब्दार्थालंकारा ज्ञेयाः ।

**विदूषकः**—एदं तं मरगअपुञ्जम् । इह उवविसिअ पिअवअस्सो पडिवालेदु तम् । संझावि संणिहिदा वट्टदि ।

(उभौ तथा कुरुतः ।)

**राजा**—अदिसिसिरं पि हिमाणिं संदावदाइणिं अणुहवामि ।

**विदूषकः**—ता लच्छीसहअरो खणं चिट्ठदु देवो, जाव अहं सिसिरोपआरसामग्गिं संपादेमि । (इति नाट्येन निष्क्रम्य पुरोऽवलोक्य च ।) किं उण एसा विअक्खणा इदो णिअडा आअच्छदि ।

**राजा**—संणिहिदो संकेअकालो कहिदो मन्तीहिं पि । (स्मृत्वा । सवनाकूतमभिनीय ।)

> किसलअकरचरणा वि हु कुवलअणअणा मिअङ्कवअणा वि ।
> अहह णवचम्पअङ्गी तह वि तावेइ अच्चरिअम् ॥ ४ ॥

---

**विदूषकः**—

एतत्तन्मरकतपुञ्जम् । इहोपविश्य प्रियवयस्यः प्रतिपालयतु ताम् । संध्यापि संनिहिता वर्तते ।

वयस्येति संबुद्धिः । 'विदूषकेन वक्तव्यो वयस्येति च भूपतिः ।' इत्युक्तेः ।

**राजा**—

अतिशिशिरामपि हिमानीं संतापदायिनीमनुभवामि ।

'हिमानी हिमसंहतिः' इति त्रिकाण्डी ।

**विदूषकः**—

तल्लक्ष्मीसहचरः क्षणं तिष्ठतु देवः, यावदहं शिशिरोपचारसामग्रीं संपादयामि । किं पुनरेषा विचक्षणा इतो निकटा आगच्छति ।

तल्लक्ष्मीः तत्कान्तिः । तन्मात्रसहाय इत्यर्थः ।

**राजा**—

संनिहितः संकेतकालः कथितो मन्त्रिभ्यामपि ।

> किसलयकरचरणापि खलु कुवलयनयना मृगाङ्कवदनापि ।
> अहह नवचम्पकाङ्गी तथापि तापयत्याश्चर्यम् ॥

अत्रापि छेकानुप्रासविभावनारूपकहेतुसंकररूपाः शब्दार्थालंकारा ऊह्याः । विभावनालक्षणमुक्तमभियुक्तैः—'कारणाभावेऽपि कार्योपक्षेपो विभावना' इति । अहेतुलक्षणमप्युक्तम्—'कारणे सत्यपि कार्याभावोऽहेतुः' इति । अस्यैव संज्ञा विशेषोक्तिरिति काव्यप्रकाशे । संकरलक्षणमप्युक्तम्—'स्वातन्त्र्येणाङ्गत्वेन संशयेनैकपद्येन वालंकाराणामेकत्रावस्थानं संकरः' इति ।

विदूषकः—(सम्यगवलोक्य।) अए, विअक्खणा सिसिरोवआरसामग्गीसहिदहत्था आअदा।

(ततः प्रविशति शिशिरोपचारसामग्रीसहिता विचक्षणा।)

विचक्षणा—(परिक्रम्य।)अहो, पिअसहीए महन्तो क्खु विरहदाहज्जरो।

विदूषकः—(उपसृत्य।) भोदि, किं एदम्।

विचक्षणा—सिसिरोवआरसामग्गी।

विदूषकः—कस्स कदे।

विचक्षणा—पिअसहीए कदे।

विदूषकः—ता मह वि अद्धं देहि।

विचक्षणा—किं णिमित्तम्।

विदूषकः—महाराअस्स कदे।

---

विदूषकः—

अये, विचक्षणा शिशिरोपचारसामग्रीसहितहस्तागता।

'नासूचितस्य पात्रस्य प्रवेशः' इति पूर्वमेव विदूषकमुखेन सूचनम्।

विचक्षणा—

अहो, प्रियसख्या महान्खलु विरहदाहज्वरः।

विदूषकः—

भवति, किमेतत्।

विचक्षणा—

शिशिरोपचारसामग्री।

विदूषकः—

कस्य कृते।

विचक्षणा—

प्रियसख्याः कृते।

विदूषकः—

तन्ममाप्यर्धं देहि।

विचक्षणा—

किं निमित्तम्।

विदूषकः—

महाराजस्य कृते।

विचक्षणा—किं उण कारणं तस्स।

विदूषकः—कप्पूरमञ्जरीए वि किम्।

विचक्षणा—किं ण जाणासि महाराअस्स दंसणम्।

विदूषकः—तुमं वि किं ण जाणासि महाराअस्स कप्पूरमञ्जरीए दंसणम्।

(इत्युभौ हसतः।)

विचक्षणा—ता कहिं महाराओ।

विदूषकः—तुह वअणेण मरगअपुञ्जे चिट्ठदि।

विचक्षणा—ता महाराएण सह मरगअपुञ्जदुआरे चिट्ठ खणम्, जेण उहअदंसणे जादे सिसिरोवआरसामग्गीए जलञ्जली दिज्जदि।

---

विचक्षणा—

किं पुनः कारणं तस्य।

विदूषकः—

कर्पूरमञ्जर्या अपि किम्।

कारणमिति पूर्वतनाध्याहारः।

विचक्षणा—

किं न जानासि महाराजस्य दर्शनम्।

विदूषकः—

त्वमपि किं न जानासि महाराजस्य कर्पूरमञ्जर्या दर्शनम्।

विचक्षणा—

तत्कुत्र महाराजः।

विदूषकः—

तव वचनेन मरकतपुञ्जे तिष्ठति।

विचक्षणा—

तन्महाराजेन सह मरकतपुञ्जद्वारे तिष्ठ क्षणम्, येनोभयदर्शने जाते शिशिरोपचारसामग्र्या जलाञ्जलिर्दीयते।

**विदूषकः**—(सामर्षम् ।) तहिं गच्छ जहिं ण आगच्छसि । (इति क्षिपति।) (पुनस्तां प्रति ।) ता कीस दुआरदेसे होदव्वम् ।

**विचक्षणा**—देवीए आदेसेण कप्पूरमञ्जरी समाअच्छदि ।

**विदूषकः**—को तीए आदेसो ।

**विचक्षणा**—तहिं देवीए बालतरुणो तिण्णि आरोविदा ।

**विदूषकः**—को को ।

**विचक्षणा**—कुरबअतिलआसोआ ।

**विदूषकः**—ता किं तेहिं ।

**विचक्षणा**—भणिदा सा देवीए । जधा—

कुरबअतिलआसोआ आलिङ्गणदंसणाभचअणहआ ।
विअसन्ति कामिणीणं ता ताणं देहि दोहलअम् ॥ ४१ ॥

---

**विदूषकः**—
तत्र गच्छ यतो नागच्छसि । तत्किं द्वारदेशे भवितव्यम् ।
**विचक्षणा**—
देव्या आदेशेन कर्पूरमञ्जरी समागच्छति ।
**विदूषकः**—
किं तस्या आदेशः ।
**विचक्षणा**—
तत्र देव्या बालतरवस्त्रय आरोपिताः ।
**विदूषकः**—
कः कः ।
**विचक्षणा**—
कुरबकतिलकाशोकाः ।
**विदूषकः**—
तत्किं तैः ।
**विचक्षणा**—
भणिता सा देव्या । यथा—

कुरबकतिलकाशोका आलिङ्गनदर्शनाग्रचरणहताः ।
विकसन्ति कामिनीनां तत्तेषां देहि दोहदकम् ॥

एहिं तं संपादइस्सदि ।

विदूषकः—ता मरगअपुञ्जादो पिअवअस्सं आणीअ तमालविडवन्तरिदं ठाविअ एदं पच्चक्खं करइस्सम् । (तथा कारयित्वा । राजानं प्रति ।) भो भो, उट्ठिअ पेक्ख णिअहिअअसमुद्दचन्दलेहम् ।

(राजा तथा करोति ।)

(ततः प्रविशति विशेषभूषिताङ्गी कर्पूरमञ्जरी ।)

कर्पूरमञ्जरी—कहिं उण विअक्खणा ।

विचक्षणा—(तामुपसृत्य ।) सहि, करीअदु देवीए समादिट्ठम् ।

राजा—वअस्स, किं उण तम् ।

---

यद्यस्मात्कारणात्कामिनीनामालिङ्गनदर्शनाघ्रचरणहताः सन्तः कुरबकादयो वृक्षा विकसन्ति उत्फुल्ला भवन्ति तत्तस्मात्तेषां दोहदकं देहीति यत्पदाध्याहारेण योज्यम् । यद्वा तदिदमिति तच्छब्देन पूर्वोक्तालिङ्गनादि परामृश्य योज्यम्, तदा न यत्पदाध्याहारः। कुरबकादित्रयस्य कामिन्यालिङ्गनादित्रयेणैव विकासो वर्ण्यत इति कविसंप्रदायः । तथोक्तम्—'पादाहतः प्रमदया विकसत्यशोकः शोकं जहाति बकुलो मुखसीधुसिक्तः । आलिङ्गितः कुरबकः कुरुते विकासमालोकितस्तिलक उत्कलिको विभाति ॥' इति । 'आलिङ्गनेनैव मृगायताक्ष्याः प्रफुल्लतां वै तिलकः प्रयाति । अशोकशाखी पुनरङ्घ्रिपातैर्विवेकशाली विरलो हि लोके ॥' इति च । अत्रापि च्छेकानुप्रासः ।

इदानीं तत्संपादयिष्यति ।

विदूषकः—

तन्मरकतपुञ्जात्प्रियवयस्यमानीय तमालविटपान्तरितं स्थापयित्वा एतत्प्रत्यक्षं कारयिष्यामि । भो भोः, उत्थाय प्रेक्षस्व निजहृदयसमुद्रचन्द्रलेखाम् ।

निजहृदयमेव समुद्रस्तत्र चन्द्रलेखेव कर्पूरमञ्जरी ताम् ।

कर्पूरमञ्जरी—

क्व पुनर्विचक्षणा ।

विचक्षणा—

सखि, क्रियतां देव्या समादिष्टम् ।

कुरबकादीनां दोहददानमित्यर्थः ।

राजा—

वयस्य, किं पुनस्तत् ।

**विदूषकः**—तमालविडवन्तरिदो जाण ।

(राजा तथा करोति ।)

**विचक्षणा**—एस कुरबअतरू ।

(कर्पूरमञ्जरी तमालिङ्गति ।)

**राजा**—

णवकुरबअरुक्खो कुम्भथोरत्थणीए
रहसविरइदेण णिब्भरालिङ्गणेण ।
तह कुसुमसमिद्धिं लम्भिदो सुन्दरीए
जह भसलकुलाणं तत्थ जत्ता पउत्ता ॥ ४४ ॥

**विदूषकः**—भो, पेक्ख पेक्ख महिन्दजालम् । जेण

बालो वि कुरबअतरू तरुणीए गाढमुवगूढो ।
सहसत्ति फुल्लणिअरं मदनसरं विअ समुग्गिरइ ॥ ४५ ॥

---

**विदूषकः**—

तमालविटपान्तरितो जानीहि ।

**विचक्षणा**—

एष कुरबकतरुः ।

**राजा**—

नवकुरबकवृक्षः कुम्भस्थूलस्तन्या
रभसविरचितेन निर्भरालिङ्गनेन ।
तथा कुसुमसमृद्धिं लम्भितः सुन्दर्या
यथा भ्रमरकुलानां तत्र यात्रा प्रवृत्ता ॥

जातेति यावत् अथ च तत्रेति तत इत्यर्थे । तत्र ततो यात्रा गमनागमनं समाप्तमित्यर्थः । सर्वदा तत्रैव तिष्ठन्तीति भावः । यद्वा असमाप्तेति नञ्प्रश्लेषः । तत्रेति विषयसप्तमी । तथा च तद्विषये यात्रा वृक्षान्तरात्तत्रागमनं तत्र समाप्तमित्यर्थः । अनेन कुसुमभूमा, तत्र च सौरभातिशयो ध्वन्यते । अत्रापि च्छेकानुप्रासरूपकोपमासंकरा अलंकाराः ।

**विदूषकः**—

भोः, प्रेक्षस्व प्रेक्षस्व महेन्द्रजालम् । येन

बालोऽपि कुरबकतरुस्तरुण्या गाढमुपगूढः ।
सहसेति पुष्पनिकरं मदनशरमिव समुद्गिरति ॥

राजा—ईदिसो ज्जेब दोहळअस्स प्पभावो ।

विचक्खणा—अह एसो तिळअद्दुमो ।

(कर्पूरमञ्जरी चिरं तिर्यगवलोकयति ।)

राजा—

तिक्खाणं तरलाणँ कज्जलकलासंवग्गिदाणं पि से
　पासे पञ्चसरं सिलीमुहधरं णिच्चं कुणन्ताणँ अ ।
णेत्ताणं तिळअद्दुमे णिवडिदा धाडी मिअच्छीअ जं
　तं सो मञ्जरिपुञ्जदन्तुरसिरो रोमञ्चिदो व्व ट्ठिदो ॥ ४६ ॥

विचक्खणा—एसो असोअसाही ।

(कर्पूरमञ्जरी चरणताडनं नाटयति ।)

---

राजा—

ईदृश एव दोहदस्य प्रभावः ।

विचक्षणा—

अथैष तिलकद्रुमः ।

राजा—

तीक्ष्णयोस्तरलयोः कज्जलकलासंवलितयोरप्यस्याः
　पार्श्वे पञ्चशरं शिलीमुखधरं नित्यं कुर्वतोश्च ।
नेत्रयोस्तिलकद्रुमे निपतिता धाटी मृगाक्ष्याय-
　त्तत्स मञ्जरीपुञ्जदन्तुरशिरा रोमाञ्चित इव स्थितः ॥

तीक्ष्णयोर्दीर्घकटाक्षमयोः, कज्जलकला सूक्ष्मं कज्जलं तत्संवलितयोस्तरलयोः, पञ्चशरं काममस्याः कर्पूरमञ्जर्याः पार्श्वे शिलीमुखधरं बाणधरं नित्यं सर्वदा कुर्वतोः, मृगाक्ष्या नेत्रयोर्घाटी रचनाव्यापारविशेषस्तिलकद्रुमे यद्यस्मात्कारणात्पतितस्तस्मात्स-तिलकतरुर्मञ्जरीणां पुञ्जः समूहस्तेन दन्तुरं साङ्कुरं शिरोऽग्रं यस्य सः । अत एव रोमाञ्चित इव संजातरोमाञ्च इव वर्तत इत्यर्थः । शिलीमुखधरं पञ्चशरं पार्श्वे नित्यं कुर्वतोरित्यनेन कंदर्पबाणसाम्यं नेत्रयोर्व्यञ्जितम् । तेन च कामिजितत्वसंपादकत्वं कामबाण-धर्मोऽनयोर्व्यज्यते । अत्रापि श्लेषरूपकानुप्रासोपमोत्प्रेक्षाणां संकरालंकारो ज्ञेयः ।

विचक्षणा—

एषोऽशोकशाखी ।

राजा—

असोअतरुताडणं रणिदणेउरेणङ्घिणा
कदं च मिअलञ्छणच्छविमुहीअ हेलुल्लसम् ।
सिहासु सअलासु वि त्थवअमण्डणाडम्बरं
ठिदं च गअणङ्कणं जणणिरिक्खणिज्जं खणम् ॥ ४७ ॥

विदूषकः—भो वअस्स, जं सअं ण कदं दोहलअदाणं देवीए जाणेसि तत्थ किं कारणम् ।

राजा—तुमं जाणेसि ।

विदूषकः—भणामि जइ देवो ण कुप्पदि ।

राजा—को एत्थ रोसावसरो । भण उम्मुद्दिआए जीहाए ।

---

राजा—

अशोकतरुताडनं रणितनूपुरेणाङ्घ्रिणा
कृतं च मृगलाञ्छनच्छविमुख्या हेलोल्लासम् ।
शिखासु सकलास्वपि स्तबकमण्डनाडम्बरं
स्थितं च गगनाङ्गणं जननिरीक्षणीयं क्षणम् ॥

मृगलाञ्छनच्छविः शशाङ्ककान्तिर्मुखे यस्याः । मृगलाञ्छनस्य छविर्यस्मिंस्तादृशं मुखं यस्या इति वा । तादृश्या कर्पूरमञ्जर्या । पादद्वयेनोभयमपि समकालमेवोत्पन्नवदिति द्योत्यते । अत्रापि छेकानुप्रासलाटानुप्रासोपमादयोऽलंकारा ज्ञेयाः ।

विदूषकः—

भो वयस्य, यत्स्वयं न कृतं दोहदकदानं देव्या जानासि तत्र किं कारणम् ।

राजा—

त्वं जानासि ।

विदूषकः—

भणामि यदि देवो न कुप्यति ।

राजा—

कोऽत्र रोषावसरः । भणोन्मुद्रितया जिह्वया ।

विदूषकः—

इह जइ वि कामिणीणं सुन्देरं धरइ अवअवाणँ सिरी।
अहिदेवदे व्व णिवसइ तह वि हु तारुण्णए लच्छी॥ ४८॥

राजा—सुणिदो दे अहिप्पाओ। किं उण किं पि भणामो।

बालाअ होन्ति कोऊहलेण एमेअ चवलचित्ताओ।
दरलसिअथणीसु पुणो णिवसइ मअरद्धअरहस्सम्॥ ४९॥

विदूषकः—तरुणो वि रूअरेहारहस्सेण फुल्लन्ति। ण उण रइरहस्सं जाणन्ति।

(नेपथ्ये।)

वैतालिकः—सुहसंझा भोदु देवस्स।

लोआणं लोअणेहिं सह कमलवणं अद्धणिद्दं कुणन्तो
मुञ्चन्तो तिक्खभावं सह अ सरभसं माणिणीमाणसेहिं।

---

विदूषकः—

इह यद्यपि कामिनीनां सौन्दर्यं धारयत्यवयवानां श्रीः।
अधिदेवतेव निवसति तथापि खलु तारुण्ये लक्ष्मीः॥

अत्रापि व्यतिरेकोपमे।

राजा—

श्रुतस्तेऽभिप्रायः। किं पुनः किमपि भणामः।

बाला भवन्ति कौतूहलेनैवमेव चपलचित्ताः।
दरलसितस्तनीषु पुनर्निवसति मकरध्वजरहस्यम्॥

विदूषकः—

तरवोऽपि रूपरेखारहस्येन विकसन्ति। न पुना रतिरहस्यं जानन्ति।

यतस्तरुणीकुचसंस्पर्शेन विनापि विकसन्तीति भावः।

वैतालिकः—

सुखसंध्या भवतु देवस्य।

लोकानां लोचनैः सह कमलवनमर्धनिद्रं कुर्व-
न्मुञ्चंस्तीक्ष्णभावं सह च सरभसं मानिनीमानसैः।

मञ्जिट्ठारत्तसुत्तच्छविकिरणचओ चक्कवाएक्कमित्तो
जादो अत्थाचलत्थी उवह दिणमणी पक्कणारङ्गपिङ्गो ॥ ५० ॥

राजा—भो वअस्स, संणिहिदो संझासमओ वट्टदि ।

विदूषकः—संकेअकालो कहिदो बन्दीहिं ।

कर्पूरमञ्जरी—सहि विअक्खणे, गमिस्सं दाव । विआलो संवुत्तो व-
ट्टदि ।

विचक्षणा—एवं कीरदु ।

(इति परिक्रम्य निष्क्रान्ताः सर्वे ।)

इति द्वितीयं जवनिकान्तरम् ।

---

मञ्जिष्ठारक्तसूत्रच्छविकिरणचयश्चक्रवाकैकमित्रं
जातोऽस्ताचलार्थी पश्यत दिनमणिः पक्वनारङ्गपिङ्गः ॥

उवहेति देशी पश्यतेत्यस्मिन्नर्थे । अत्रापि स्वभावोक्त्युपमादयः ।

राजा—
भो वयस्य, संनिहितः संध्यासमयो वर्तते ।

विदूषकः—
संकेतकालः कथितो बन्दिभिः ।

कर्पूरमञ्जरी—
सखि विचक्षणे, गमिष्यामि तावत् । विकालः संवृत्तो वर्तते ।

विचक्षणा—
एवं क्रियताम् ।

इति श्रीमद्विद्वद्वृन्दवन्दितारविन्दसुन्दरपदद्वन्द्वकुन्दप्रतिमयशःप्रकरप्रखरकठोर-
किरणकरप्रभप्रतिभप्रभाकरभट्टात्मजवासुदेवविरचिते कर्पूरमञ्जरीप्रकाशे
द्वितीयं जवनिकान्तरं समाप्तम् ।

---

तृतीयं जवनिकान्तरम्।

(ततः प्रविशति राजा विदूषकश्च।)

राजा—(तामनुसंधाय।)

दूरे किज्जदु चम्पअस्स कलिआ कज्जं हरिद्दाअ किं
उत्तत्तेण अ कञ्चणेण गणना का णाम जच्चेण वि।
लावण्णस्स णवुग्गदेन्दुमहुरच्छाअस्स तिस्सा पुरो
पच्चग्गेहिं वि केसरस्स कुसुमक्केरेहिं किं कारणम्॥ १॥

अवि अ।

मरगअमणिजुट्ठा हारलट्ठि व्व तारा
भमरकवलिअद्धा मालईमालिए व्व।
रहसवलिअकण्ठी तीअ दिट्ठी वरिट्ठा
सवणपहणिविट्ठा माणसं मे पविट्ठा॥ २॥

विदूषकः—भो वअस्स, किं तुमं भज्जाजिदो विअ किंपि किंपि कुरुकुराअन्तो चिट्ठसि।

---

दूरेति।

दूरे क्रियतां चम्पकस्य कलिका कार्यं हरिद्रायाः किं
उत्तप्तेन च काञ्चनेन गणना का नाम जात्येनापि।
लावण्यस्य नवोद्गतेन्दुमधुरच्छायस्य तस्याः पुरः
प्रत्यग्रैरपि केसरस्य कुसुमोत्करैः किं कारणम्॥

तस्या लावण्यस्येति संबन्धः। अत्राक्षेपोपमे। आक्षेपलक्षणमुक्तं वृद्धैः—'प्रतिषेधपुरःसरोक्तिराक्षेपः।' काव्यादर्शेऽपि—'प्रतिषेधोक्तिराक्षेपः' इति।

अपि च।

मरकतमणिजुष्टा हारयष्टिरिव तारा
भ्रमरकवलितार्धा मालतीमालिकेव।
रभसवलितकण्ठी तस्या दृष्टिर्वरिष्ठा
श्रवणपथनिविष्टा मानसं मे प्रविष्टा॥

तारैव भ्रमरस्तेन कवलितमर्धं यस्या इति वा। अत्रापि रूपकोत्प्रेक्षे।

विदूषकः—

भो वयस्य, किं त्वं भार्याजित इव किमपि किमपि कुरुकुरायमाणस्तिष्ठसि।

**राजा**—वअस्स, सिविणअं दिट्ठमणुसंधेमि।

**विदूषकः**—ता कहेदु पिअवअस्सो।

**राजा**—

जाणे पङ्करुहाणणा सिविणए मं केलिसज्जागदं
कन्दोट्टेण तडित्ति ताडिदुमणा हत्थन्तरे संठिदा।
ता कोडेण मए वि झत्ति धरिदा ठिल्लं वरिल्लञ्चले
तं मोत्तूण गदं अ तीअ सहसा णट्ठा अ णिद्दा वि मे॥ ३॥

**विदूषकः**—(स्वगतम्।) भोदु। एवं दाव। (प्रकाशम्।) भो वअस्स, अज्ज मए वि सिविणं दिट्ठम्।

**राजा**—(सप्रत्याशम्।) ता कहिज्जदु कीरिसं तं सिविणअम्।

**विदूषकः**—अज्ज जाणे सिविणए सुरसरिआसोत्ते सुत्तो म्हि। ता हरसिरसोवरि दिण्णलीलाचलणाए गङ्गाए पक्खालिदो म्हि तोएण।

---

**राजा**—

वयस्य, स्वप्नं दृष्टमनुसंदधामि।

**विदूषकः**—

तत्कथयतु प्रियवयस्यः।

**राजा**—

जाने पङ्करुहानना स्वप्ने मां केलिशय्यागत-
मिन्दीवरेण तटिति ताडितुमना हस्तान्तरे संस्थिता।
तत्कौतूहलेन मयापि झटिति धृता शिथिलं वस्त्राञ्चले
तन्मोचयित्वा गतं च तया सहसा नष्टा च निद्रापि मे॥

कन्दोट्टमिन्दीवरमिति, ठिल्लं शिथिलमिति च देशी।

**विदूषकः**—

भवतु। एवं तावत्। भो वयस्य, अद्य मयापि स्वप्नो दृष्टः।

**राजा**—

तत्कथ्यतां कीदृशः स स्वप्नः।

**विदूषकः**—

अद्य जाने स्वप्ने सुरसरित्स्रोतसि सुप्तोऽस्मि। तद्धरशिरस उपरि दत्तलीलाचरणाया गङ्गायाः प्रक्षालितोऽस्मि तोयेन।

राजा—तदो तदो।

विदूषकः—तदो सरअसमअवरिसिणा जलहरेण जहिच्छं पीदोम्हि।

राजा—अच्छरिअम् अच्छरिअम्। तदो तदो।

विदूषकः—तदो सत्तिणक्खत्तगदे भअवइ मत्तण्डे तम्मवण्णीणईसंगदं समुद्दं गदो महामेहो। जाणे अहं वि मेहगब्भट्ठिदो गच्छेमि।

राजा—तदो तदो।

विदूषकः—तदो सो तहिं थूलजलबिन्दूहिं वरिसिदुं पउत्तो। अहं च रअणाअरसुत्तीहिं मुत्ताणामहेआहिं संपुडं समुग्घाडिअ जलबिन्दूहिं समं पीदोम्हि। ताणं च दसमासप्पमाणं मोत्ताहलं भविअ गब्भे ठिदो।

राजा—तदो तदो।

---

राजा—

ततस्ततः।

विदूषकः—

ततः शरत्समयवर्षिणा जलधरेण यथेच्छं पीतोऽस्मि।

राजा—

आश्चर्यमाश्चर्यम्। ततस्ततः।

विदूषकः—

ततः स्वातिनक्षत्रगते भगवति मार्तण्डे ताम्रपर्णीनदीसंगतं समुद्रं गतो महामेघः। जानेऽहमपि मेघगर्भस्थितो गच्छामि।

राजा—

ततस्ततः।

विदूषकः—

ततोऽसौ तत्र स्थूलजलबिन्दुभिर्वर्षितुं प्रवृत्तः। अहं च रत्नाकरशुक्तिभिर्मुक्तानामधेयाभिः संपुटं समुद्घाट्य जलबिन्दुभिः समं पीतोऽस्मि। तासां च दशमासप्रमाणं मुक्ताफलं भूत्वा गर्भे स्थितः।

राजा—

ततस्ततः।

विदूषकः—

तदो चउस्सट्ठिसु सुत्तिसु ट्ठिदो घणम्बुबिन्दू जिअवंसरोअणो।

सुवत्तुलं णित्तलमच्छमुज्जलं कमेण पत्तो णवमुत्तिअत्तणम् ॥ ४ ॥

राजा—तदो तदो।

विदूषकः—तदो सोहमत्ताणं ताणं सुत्तीणं गब्भगअं मुत्ताहलत्तणेण मण्णेमि।

राजा—तदो तदो।

विदूषकः—तदो परिणदे काले समुद्दाहिंतो कड्ढिदाओ ताओ सुत्तीओ, फाडिदाओ अ। अहं चतुस्सट्ठिमुत्ताहलत्तणं गदो ट्ठिदो। किणिदो अ एक्केण सेट्ठिणा सुवण्णलक्खं देइअ।

राजा—अहो विचित्तदा सिविणअस्स। तदो तदो।

विदूषकः—तदो तेण आणिअ वेधआरएहिं वेधाविआइं मोत्तिआइं। मम वि ईसीसि वेअणा समुप्पण्णा।

---

विदूषकः—

ततश्चतुःषष्टिषु स्थितो घनाम्बुबिन्दुर्जितवंशरोचनः।

सुवर्तुलं निस्तलमच्छमुज्ज्वलं क्रमेण प्राप्तो नवमौक्तिकत्वम् ॥

राजा—

ततस्ततः।

विदूषकः—

ततः सोऽहमात्मानं तासां शुक्तीनां गर्भगतं मुक्ताफलत्वेन मन्ये।

राजा—

ततस्ततः।

विदूषकः—

ततः परिणते काले समुद्रात्कर्षितास्ताः शुक्तयः, विदारिताश्च। अहं चतुःषष्टिमुक्ताफलत्वं गतः स्थितः। क्रीतश्चैकेन श्रेष्ठिना सुवर्णलक्षं दत्त्वा।

राजा—

अहो विचित्रता स्वप्नस्य। ततस्ततः।

विदूषकः—

ततस्तेनानीय वेधकारैर्वेधितानि मौक्तिकानि। ममापीषदीषद्वेदना समुत्पन्ना।

राजा—तदो तदो ।

विदूषकः—तदो

तेणावि मुत्ताहलमण्डलेण एक्केक्कदाए दसमासिएण ।
एक्कावली गण्ठिकमेण गुत्था जा संठिदा कोटिसुवण्णमुल्ला ॥ ५ ॥

राजा—तदो तदो ।

विदूषकः—तदो तं करण्डिआए कदुअ सागरदत्तो णाम वाणिओ गदो पञ्चालाधिपस्स सिरिवज्जाउहस्स णअरं कण्णउज्जं णाम । तहिं च सा विक्किणीदा कोटिए सुवण्णस्स ।

राजा—तदो तदो ।

विदूषकः—तदो अ

दट्ठूण थोरत्थणतुङ्गिमाणं एक्कावलीए तह चङ्गिमाणम् ।
सा तेण दिण्णा दइआइ कण्ठे रज्जन्ति छेआ समसंगमम्मि ॥ ६ ॥

---

राजा—
ततस्ततः ।

विदूषकः—
ततः
तेनापि मुक्ताफलमण्डलेनैकैकतया दशमाषिकेण ।
एकावली ग्रन्थिक्रमेण गुम्फिता सा संस्थिता कोटिसुवर्णमूल्या ॥

राजा—
ततस्ततः ।

विदूषकः—
ततस्तां करण्डिकायां कृत्वा सागरदत्तो नाम वणिग्गतः पाञ्चालाधिपस्य श्रीवज्रायुधस्य नगरं कान्यकुब्जं नाम । तत्र च सा विक्रीता कोट्या सुवर्णस्य ।

राजा—
ततस्ततः ।

विदूषकः—
ततश्च

अवि अ।

णहवहलिदजोह्णाणिब्भरे रत्तिमज्झे
कुसुमसरपहारत्ताससंमीलिदाणम्।
णिहुवणपरिरम्भे णिब्भरुत्तुङ्गपीण-
त्थणकलसणिवेसा पीडिदोऽहं विबुद्धो॥ ७॥

राजा—(किंचिद्विहस्य, विचिन्त्य च।)

सिविणअमिअं असच्चं तं दिट्ठं मेणुसंधमाणस्स।
पडिसिविणएण तस्स वि णिआरणं तुह अहिप्पाओ॥ ८॥

विदूषकः—भट्टो ठक्कुरो, क्खुहाकिलन्तो बह्मणो, अविणीदहिअआ बालरण्डा, विरहिदो अ माणुसो मणोरहमोदएहिं अत्ताणं विडम्बेदि। अवि अ वअस्स, पुच्छेमि कस्स उण एसो प्पहाओ।

---

दृष्ट्वा स्थूलस्तनतुङ्गिमानमेकावल्यास्तथा चङ्गिमानम्।
सा तेन दत्ता दयितायाः कण्ठे रज्यन्ति च्छेका समसंगमे॥
कण्ठदानाच्चैकावलीस्तनसंगमो भविष्यतीति भावः। च्छेका विदग्धाः।

अपि च।

नभोबहलितज्योत्स्नानिर्भरे रात्रिमध्ये
कुसुमशरप्रहारत्राससंमीलितयोः।
निधुवनपरिरम्भे निर्भरोत्तुङ्गपीन-
स्तनकलशनिवेशात्पीडितोऽहं विबुद्धः॥

राजा—

स्वप्नमिममसत्यं तद्दृष्टं ममानुसंदधतः।
प्रतिस्वप्नेन तस्यापि निवारणं तवाभिप्रायः॥
न तु वस्तुतः स्वप्नो दृष्ट इति भावः।

विदूषकः—

भ्रष्टो राजा, क्षुधाक्लान्तो ब्राह्मणः, अविनीतहृदया बालरण्डा, विरहितश्च मानुषो मनोरथमोदकैरात्मानं विडम्बयति। अपि च वयस्य, पृच्छामि कस्य पुनरेष प्रभावः।

भ्रष्टः। राज्यादिति शेषः। ठक्कुरो राजा। अविनीतहृदया पुरुषसंसर्गाभिलाषिणी[illegible]। विरहितो विरहयुक्तः।

राजा—पेम्मस्स ।

विदूषकः—भो, देवीगदे पणअप्परूढे वि पेम्मे किं ति कप्पूरमञ्जरीं सव्वङ्गवित्थारिअलोअणो पिअन्तो विअ अवलोकेसि । किं तदो वि परिहीअप्पमाणगुणा देवी ।

राजा—मा एव्वं भण ।

कीए वि संघडइ कस्स वि पेम्मगण्ठी
　एमेव्व तत्थ ण हु कारणमत्थि रूअम् ।
चङ्गत्तणं उण मग्गिज्जदि जं तर्हिं पि
　ता दिज्जए पिसुणलोअमुहेसु मुद्दा ॥ ९ ॥

विदूषकः—भो, किं उण एदं पेम्मत्ति भणन्ति ।

राजा—अण्णोण्णमिलिदस्स मिहुणस्स मअरद्धअसासणे पणअगण्ठि पेम्मेत्ति छइल्ला भणन्ति ।

---

राजा—
प्रेम्णः ।

विदूषकः—
भोः, देवीगते प्रणयप्ररूढेऽपि प्रेम्णि किमिति कर्पूरमञ्जरीं सर्वाङ्गविस्तारितलोचनः पिबन्निवावलोकयसि । किं ततोऽपि परिहीणप्रमाणगुणा देवी ।
परिहीणं प्रमाणं येषामेवंविधा गुणा यस्याः सा ।

राजा—
मैवं भण ।

कयाचित्संघटते कस्यापि प्रेमग्रन्थि-
　रेवमेव तत्र न खलु कारणमस्ति रूपम् ।
चङ्गत्वं पुनर्मृग्यते यत्तत्रापि
　तद्दीयते पिशुनलोकमुखेषु मुद्रा ॥

प्रेमग्रन्थिसंघटने न रूपातिशयः कारणं किं तु तत्स्वभावादेव भवति । तथापि यत्सौन्दर्यान्वेषणं क्रियते केवलं तत्कुटिलमुखेषु मुद्रा दीयते । किमित्यस्यामस्य प्रेमानुबन्ध इति पिशुनजनाकाङ्क्षायां तन्निवर्तकत्वेन परं सौन्दर्यमुपयुज्यत इत्यर्थः । अत्राप्यर्थान्तरन्यासानुप्रासादयः ।

विदूषकः—
भोः, किं पुनरेतत्प्रेम प्रेमेति भणन्ति ।

विदूषकः—कीदिसो सो।

राजा—

जस्सिं विकप्पघडणाइकलङ्कमुक्को
अत्ताणअस्स सरलत्तणमेइ भावो।
एक्कक्कअस्स पसरन्तरसप्पवाहो
सिङ्गारवड्ढिअमणोभवदिण्णसारो ॥ १० ॥

विदूषकः—कधं विअ सो लक्खीअदि।

राजा—

जाणं सहावपसरन्तसलोलदिट्ठी-
पेरन्तलुण्ठिअमणाणँ परप्परेण।

---

राजा—

अन्योन्यमिलितस्य मिथुनस्य मकरध्वजशासने प्ररूढं प्रणयग्रन्थिं प्रेमेति विदग्धा भणन्ति।

विदूषकः—

कीदृशः सः।

राजा—

यस्मिन्विकल्पघटनादिकलङ्कमुक्तः
आत्मनः सरलत्वमेति भावः।
एकैकस्य प्रसरद्रसप्रवाहः
शृङ्गारवर्धितमनोभवदत्तसारः॥

यस्मिन्प्रेम्णि विकल्पघटना तत्संबन्धस्तदादिरेव कलङ्कस्तस्मान्मुक्तस्तद्रहितो भावश्चित्ताभिप्राय आत्मनः सरलत्वं सरलभावमेति। कीदृशः। एकैकस्य प्रसरन्रसप्रवाहो यत्र। पुनः कीदृक्। शृङ्गारेण वर्धितो यो मनोभवस्तेन दत्तः सारो यत्र। अत्रापि स्वभावोक्त्यादयः शब्दार्थालंकारा ऊह्याः।

विदूषकः—

कथमिव स लक्ष्यते।

राजा—

ययोः स्वभावप्रसरत्सलोलदृष्टि-
पर्यन्तलुण्ठितमनसोः परस्परेण।

वड्ढन्तमम्महविइण्णरसप्पसारो
　　ताणं पआसइ लहुं विअ चित्तभावो ॥ ११ ॥

अवि अ ।

अन्तो णिविट्ठमणविब्भमडम्बरो जो
　　सो भण्णए मअणमण्डणमेत्थ पेम्मम् ।
दुल्लक्खअं पि पअडेइ जणो जअम्मि
　　तं जाणिमो सुबहुलं मअणिन्दजालम् ॥ १२ ॥

विदूषकः—जइ चित्तगदं पेम्ममणुराअमुप्पादेदि, ता किं कज्जदि मण्डणाडम्बरविडम्बणाए ।

राजा—वअस्स, सच्चमिणम् ।
　　किं मेहलावलअणेउरसेहरेहिं
　　　　किं चक्किमाअ किमु मण्डणडम्बरेहिं ।

---

वर्धमानमन्मथवितीर्णरसप्रसार-
　　स्तयोः प्रकाशते लघुरिव चित्तभावः ॥

स्वभावतः प्रसरन्त्यः सलोला या दृष्टयस्तासां प्रान्तैर्लुण्ठितं मनो ययोः । लुण्ठित-मिलनेन तदेकरसता ध्वन्यते ।

अपि च ।

अन्तर्निविष्टमनोविभ्रमडम्बरो यः
　　स भण्यते मदनमण्डनमत्र प्रेम ।
दुर्लक्ष्यमपि प्रकटयति जनो जगति
　　तज्जानीमः सुबहुलं मदनेन्द्रजालम् ॥

विदूषकः—

यदि चित्तगतं प्रेमानुरागमुत्पादयति, तत्किं क्रियते मण्डनाडम्बर-विडम्बनया ।

राजा—

वयस्य, सत्यमिदम् ।
　　किं मेखलावलयनूपुरशेखरैः
　　　　किं चक्रिमत्वेन किमु मण्डनाडम्बरैः ।

तं अण्णमत्थि इह किंपि णिअम्बिणीओ
जेणं लहन्ति सुहअत्तणमञ्जरीओ ॥ १३ ॥

अवि अ।

किं गेअणट्टविहिणा किमु वारुणीए
धूवेण किं अगुरुणा किमु कुङ्कुमेण।
मिट्ठत्तणे महिअलम्मि ण किं वि अण्णं
रुच्चीअ अत्थि सरिसं पुण माणुसस्स ॥ १४ ॥

अवि अ।

जा चक्कवट्टिघरिणी जणगेहिणी वा
पेम्मम्मि ताण ण तिलं वि विसेसलाभो।
जाणे सिरीअ जइ किज्जदि को वि भावो
माणिक्कभूसणणिअंसणकुङ्कुमेहिं ॥ १५ ॥

अवि अ।

किं लोअणेहिं तरलेहिं किमाणणेण
चन्दोवमेण थणएहिं किमुण्णएहिं।

---

तदन्यदस्तीह किमपि नितम्बिन्यो
येन लभन्ते सुभगत्वमञ्जरीः ॥

अपि च।

किं गेयनृत्यविधिना किमु वारुण्या
धूपेन किमगुरुणा किमु कुङ्कुमेन।
मधुरत्वे महीतले न किमप्यन्य-
द्रुचेरस्ति सदृशं पुनर्मानुषस्य ॥

अपि च।

या चक्रवर्तिगृहिणी जनगेहिनी वा
प्रेम्णि तयोर्न तिलमात्रमपि विशेषलाभः।
जाने श्रिया यदि क्रियते कोऽपि भावो
माणिक्यभूषणनिवसनकुङ्कुमैः ॥

तं किं पि अण्णमिह भूवलए णिमित्तं
जेणङ्गणाअ हिअआउ ण ओसरन्ति ॥ १६ ॥

विदूषकः—एव्वं णेदम्। किं पुण अण्णं पि मे कधेदु, जं कुमारत्तणे माणुसस्स अमणोज्जमेतस्सिं वि तरुणत्तणे चङ्गत्तणं वड्ढदि।

राजा—

णूणं दुवे इह पआवइणो जअम्मि
जे देहणिम्मवणजोव्वणदाणदक्खा।
एक्को घडेदि पढमं कुमरीणमङ्ग-
मुक्कारिऊण पअडेइ पुणो दुदीओ ॥ १७ ॥

---

अपि च।

किं लोचनैस्तरलैः किमाननेन
चन्द्रोपमेन स्तनैः किमुन्नतैः।
तत्किमप्यन्यदिह भूवलये निमित्तं
येनाङ्गना हृदयान्नापसरन्ति ॥

यूनामिति शेषः।

विदूषकः—

एवमेतत्। किं पुनरन्यदपि मे कथय, यत्कुमारत्वे मानुषस्यामनोज्ञमेतस्मिन्नपि तारुण्ये चङ्गत्वं वर्धते।

अमनोज्ञमङ्गादिकमिति शेषः। एतस्मिन्नमनोज्ञे। अपिर्भिन्नक्रमस्तारुण्य इत्यनन्तरं द्रष्टव्यः। यद्वा एतस्मिन्निति तारुण्य इत्यस्यैव विशेषणम्। एतस्मिन्नपि। एतादृशोत्कर्षवत्यपीत्यर्थः। तदा न भिन्नक्रमोऽपि।

राजा—

नूनं द्वाविह प्रजापती जगति
यौ देहनिर्माणयौवनदानदक्षौ।
एको घटयति प्रथमं कुमारीणामङ्ग-
मुत्कीर्य प्रकटयति पुनर्द्वितीयः ॥

अत्रोत्कीर्य प्रकटयतीत्यनेन निर्माणकर्तुश्चतुर्मुखापेक्षया कामस्याधिक्यमभिव्यज्यते। तथा च यौवनेऽमनोज्ञस्यापि सौभाग्यवृद्धिर्भवतीति भावः।

तेण अ।

रणिअवलअकञ्चीणेउरावासलच्छी
मरगअमणिमाला गोरिआ हारलट्ठी।
हिअअहरणमन्तं जोव्वणं कामिणीणं
जअदि मअणकण्डं छट्ठअं वट्ठअं अ॥ १८॥

तहा अ।

अङ्गं लावण्णपुण्णं सवणपरिसरे लोअणा हारतारा
वच्छं थोरत्थणिल्लं तिवलिवलइअं मुट्ठिगेज्झं अ मज्झम्।
चक्काआरो णिअम्बो तरुणिमसमए किं णु अण्णेण कज्जं
पञ्चेहिं जेव्व बाला मअणजअमहावैजअन्तीअ होन्ति॥ १९॥

(नेपथ्ये।)

सहि कुरङ्गिए, इमिणा सिसिरोवआरेण णलिणि व्व कामं किलिम्मामि।

---

तेन च।

रणितवलयकाञ्चीनूपुरावासलक्ष्मी-
र्मरकतमणिमाला गौरिका हारयष्टिः।
हृदयहरणमन्त्रं यौवनं कामिनीनां
जयति मदनकाण्डः षष्ठको बलिष्ठश्च॥

जयतीति सर्वत्र काञ्च्यादावन्वेति। न च काञ्च्यादीनां बहुत्वान्मदनकाण्डः षष्ठकोऽयमित्येतदनन्वयि स्यादिति वाच्यम्। सर्वसमुदाये षष्ठमदनकाण्डत्वविधाने दोषाभावात्। अथवा यौवनविशेषणम्। बलिष्ठजयतिपदाभ्यां चान्यकाण्डापेक्षयास्य व्यतिरेको ध्वन्यते। यतो बलिष्ठोऽत एव जयतीति हेतुहेतुमद्भावेनान्वयः। अन्योऽपि यो बलिष्ठः स जयतीत्येतदुचितमेवेति भावः।

तथा च।

अङ्गं लावण्यपूर्णं श्रवणपरिसरे लोचने हारतारे
वक्षः स्थूलस्तनं त्रिवलिवलयितं मुष्टिग्राह्यं च मध्यम्।
चक्राकारो नितम्बस्तरुणिमसमये किं न्वन्येन कार्यं
पञ्चभिरेव बाला मदनजयमहावैजयन्त्यो भवन्ति॥

हारे हरणशीले तारे ययोस्ते।

विस व्व बिसकन्दली विसहर व्व हारच्छडा
वअस्समिव अत्तणो किरइ तालविन्ताणिलो ।
तहा अ करणिग्गअं जलइ जन्तधाराजलं
ण चन्दणमहोसहं हरइ देहदाहं अ मे ॥ २० ॥

विदूषकः—सुदं पिअवअस्सेण । भरिआ कण्णा पीऊसगण्डूसेहिं । ता किं अज्जवि उपेक्खीअदि घणघम्मेण किलिमन्ती मुणालिआ, गाढकढ्ढणदुःसहेण सलिलेण सिञ्चिज्जन्ती केलिकुङ्कुमत्थली, छम्मासिअमोत्तिआणं झडिति फुडन्ती एक्कावलीआ, गण्ठिवण्णकेआलिआ लुण्ठिज्जन्ती गन्धहरिणेण । ता सच्चं दे सिविणअं संपण्णम् । एहि, पविसम्ह । उट्ठिज्जदु मअरद्धअपताआ । पअट्टदु कण्ठकुहरम्मि पञ्चमहुंकाराणां रिञ्छोली । थक्कन्तु बाहप्पवाहा । मन्थरिज्जन्तु णीसासप्पसरा । लहदु लावण्णं पुण णवभावम् । ता एहि । खिडक्किआदुआरेण पविसम्ह ।

(इति प्रविशतः ।)

---

(नेपथ्ये ।)

सखि कुरङ्गिके, अनेन शिशिरोपचारेण नलिनीव कामं क्लाम्यामि ।

शिशिरोपचारः शीतलोपचारः, शिशिरर्तुसमीपागमनं च ।

विषमिव बिसकन्दली विषधर इव हारच्छटा
वयस्यमिवात्मनः किरति तालवृन्तानिलः ।
तथा च करनिर्गतं ज्वलति यन्त्रधाराजलं
न चन्दनमहौषधं हरति देहदाहं च मे ॥

तालवृन्तानिल आत्मनो वयस्यं सखायं शिखिनमिव किरतीत्यर्थः ।

विदूषकः—

श्रुतं प्रियवयस्येन । भृतौ कर्णौ पीयूषगण्डूषैः । तत्किमद्याप्युपेक्ष्यते घनघर्मेण क्लाम्यन्ती मृणालिका, गाढक्वथितदुःसहेन सलिलेन सिच्यमाना केलिकुङ्कुमस्थली, षण्मासिकमौक्तिकानां झटिति स्फुटन्त्येकावली, ग्रन्थिपर्णकेदारिका लुण्ठ्यमाना गन्धहरिणेन । तत्सत्यं ते स्वप्नं संपन्नम् । एहि, प्रविशावः । उत्थाप्यतां मकरध्वजपताका । प्रवर्ततां कण्ठकुहरे पञ्चमहुंकाराणां रचना । स्तोकीक्रियन्तां बाष्पप्रवाहाः । मन्थरीक्रियन्तां निःश्वासप्रसराः । लभतां लावण्यं पुनर्नवभावम् । तदेहि, खिडक्किकाद्वारेण प्रविशावः ।

(ततः प्रविशति नायिका कुरङ्गिका च।)

**नायिका**—(सलाघवं स्वगतम्।) अम्मो, किं एसो सहसा गअणङ्गणादो अवइण्णो पुण्णिमाहरिणङ्को। किं वा तुट्ठेण णीलकण्ठेण णिअदेहं लम्भिदो मणोहवो। किं वा हिअअस्स दुज्जणो णअणाणं सज्जणो जणो मं संभावेदि। (प्रकाशम्।) सहि कुरङ्गिए, इन्दजालं विअ पेक्खामि।

**विदूषकः**—(राजानं हस्ते गृहीत्वा।) भोदि, सच्चं इन्दजालं संपण्णम्।

(नायिका लज्जते।)

**कुरङ्गिका**—सहि कप्पूरमञ्जरि, अब्भुट्ठाणेण संभावेहि भट्टारअम्।

(नायिका उत्थातुमिच्छति।)

**राजा**—(हस्तेन गृहीत्वा।)

उट्ठिऊण थणभारभङ्गुरं मा मिअङ्कमुहि भञ्ज मज्झअम्।
तुज्झ ईरिसणिवेसदंसणे लोअणाण मअणो पसीददु॥ २१॥

अवि अ।

जिण्णा पुरो ण हरिदा दलिआ हलिद्दा
रोसाणिअं ण कणकं ण च चम्पआइं।

---

**नायिका**—

अम्मो, किमेष सहसा गगनाङ्गनादवतीर्णः पूर्णिमाहरिणाङ्कः। किं वा तुष्टेन नीलकण्ठेन निजदेहं लम्भितो मनोभवः। किं वा हृदयस्य दुर्जनो नयनानां सज्जनो जनो मां संभावयति। सखि कुरङ्गिके, इन्द्रजालमिव पश्यामि।

तुष्टेन रत्यादिस्तुत्या तुष्टेनेत्यर्थः। 'किं वारुष्टेन' इति पाठेऽरुष्टेनेत्यकारप्रश्लेषः। तथापि रत्यादिस्तुत्या रोषरहितेनेत्यर्थः। अथवा नाकारप्रश्लेषः। किं तु रुष्टेन क्रुद्धेन नीलकण्ठेन पुनः शरीरमुत्पाद्य पुनर्दाहेनाधिकतरपीडादानाय पुनः स्वदेहं प्रापितो मनोभव इत्यर्थः।

**विदूषकः**—

भवति, सत्यमिन्द्रजालं संपन्नम्।

**कुरङ्गिका**—

सखि कर्पूरमञ्जरि, अभ्युत्थानेन संभावय भट्टारकम्।

**राजा**—

उत्थाय स्तनभारभङ्गुरं मा मृगाङ्कमुखि भञ्जय मध्यम्।
तवेदृशनिवेशदर्शनाल्लोचनयोर्मदनः प्रसीदतु॥

ताइं सुवण्णकुसुमेहिं विलोअणाइं
अच्चेमि जेहिं हरिणच्छि तुमं सि दिट्ठा ॥ २२ ॥

विदूषकः—गब्भघरवासेण सेअसलिलसित्तगत्ता संभूदा तत्तभोदी कप्पूरमञ्जरी। ता इमं सिचअञ्चलेण वीजइस्सं दाव। (तथा कुर्वन्।) हा हा, कधं वरिल्लपवणेण णिव्वण्णो पदीवो। (विचिन्त्य स्वगतम्।) भोदु। लीलोज्जाणं जेव्व गच्छह्म। (प्रकाशम्।) भो, अन्धआरणच्चिदं वट्टदि। ता णिक्कामह्म सुरङ्गामुहेण जेव्व पमदुज्जाणं दाव।

(सर्वे निष्क्रमणं नाटयन्ति।)

राजा—(कर्पूरमञ्जरीं करे धृत्वा।)

मज्झ हत्थठिदपाणिपल्लवा ईस संचरणबन्धुरा भव।
जं चिराय कलहंसमण्डली भोदु केलिगमणम्मि दुब्भगा ॥ २३ ॥

(स्पर्शसुखमभिनीय।)

जे णवस्स तिउसस्स कण्टआ जे कदम्बमउलस्स केसरा।
अज्ज तुज्झ करफंससङ्गिणो ते हुअन्ति मह अङ्गणिज्जिदा ॥ २४ ॥

---

अपि च।

यस्याः पुरो न हरिता दलिता हरिद्रा
उज्ज्वलीकृतं न कनकं न च चम्पकानि।
तानि सुवर्णकुसुमैर्विलोचने
अर्चयामि याभ्यां हरिणाक्षि त्वमसि दृष्टा ॥

विदूषकः—

गर्भगृहवासेन स्वेदसलिलसिक्तगात्रा संभूता तत्रभवती कर्पूरमञ्जरी। तदिमां सिचयाञ्चलेन वीजयिष्यामि तावत्। हा हा, कथं वस्त्राञ्चलपवनेन निर्वाणः प्रदीपः। भवतु। लीलोद्यानमेव गच्छामः। भोः, अन्धकारनृत्यं वर्तते। तन्निष्क्रामामः सुरङ्गामुखेनैव प्रमदोद्यानं तावत्।

राजा—

मम हस्तस्थितपाणिपल्लवा ईषत्संचरणबन्धुरा भव।
यच्चिराय कलहंसमण्डली भवतु केलिगमने दुर्भगा ॥

(नेपथ्ये।)

**वैतालिकः**—सुहणिबन्धणो होदु देवस्स चन्दुज्जोओ।

भूगोले तिमिराणुबन्धमलिणे भूमीरुहे व्व ट्ठिदे
संजादा णवभुज्जपिञ्जरमुही जोह्णाअ पुव्वा दिसा।
मुञ्चन्तो मुचुकुन्दकेसरसिरीसोहाणुआरे करे
चन्दो देक्ख कलाक्कमेण अ गदो संपुण्णबिम्बत्तणम् ॥ २५ ॥

अवि अ।

अकुङ्कुममचन्दणं दहदिहावहूमण्डणं
अकङ्कणमकुण्डलं भुअणमण्डलीभूसणम्।
असोसणममोहणं मअरलञ्छणस्साउहं
मिअङ्ककिरणावली णहअलम्मि पुञ्जिज्जइ ॥ २६ ॥

---

ये नवस्य त्रपुसस्य कण्टका ये कदम्बमुकुलस्य केसराः।
अद्य तव करस्पर्शसङ्गिनस्ते भवन्ति ममाङ्गनिर्जिताः ॥

कार्ये कारणवदुपचाराद्देहजन्यरोमाञ्चनिर्जिता इत्यर्थः।

**वैतालिकः**—

सुखनिबन्धनो भवतु देवस्य चन्द्रोद्द्योतः।

भूगोले तिमिरानुबन्धमलिने भूमिरुह इव स्थिते
संजाता नवभूर्जपिञ्जरमुखी ज्योत्स्नया पूर्वा दिशा।
मुञ्चन्मुचुकुन्दकेसरश्रीशोभानुकारान्करां-
श्चन्द्रः पश्य कलाक्रमेण च गतः संपूर्णबिम्बत्वम् ॥

तिमिरस्यानुबन्धस्तेन मलिने भूगोले भूमिरुह इव स्थिते। चन्द्रोदयानन्तरं यथा वृक्षमात्रमेव नीलमीक्ष्यते तथा श्यामे भूगोले स्थिते सतीत्यर्थः।'भूमीघरे' इति वा पाठः। तत्र भूमिगृहे इत्यर्थः। एककलाद्विकलाद्युदयक्रमेणेति कलाक्रमेणेत्यस्यार्थः।

अपि च।

अकुङ्कुममचन्दनं दशदिशावधूमण्डनं
अकङ्कणमकुण्डलं भुवनमण्डलीभूषणम्।
अशोषणममोहनं मकरलाञ्छनस्यायुधं
मृगाङ्ककिरणावली नभस्तले पुञ्जीभवति ॥

**विदूषकः**—भो, कणअचण्डेण वण्णिदा चन्दुज्जोअलच्छी । ता संपदं माणिक्कचण्डस्सावसरो ।

(नेपथ्ये ।)

**द्वितीयो वैतालिकः**—

दज्झन्तागुरुधूपवट्टिकलिआ दीअन्तदीउज्जला
　लम्बिज्जन्तविचित्तमोत्तिअलदा मुज्झन्तपारावदा ।
सज्जिज्जन्तमणोज्जकेलिसअणा जप्पन्तदूईसआ
　सज्जुच्छङ्गवलन्तमाणिणिजणा वट्टन्ति लीलाघरा ॥ २७ ॥

अवि अ ।

देन्ता कप्पूरपूरच्छुरणमिव दिसासुन्दरीणं मुहेसु
　स्लक्खं जोह्नं किरन्तो भुअणजणमणाणन्दणं चन्दणं व्व ।
जिण्णं कंदप्पकन्दं तिहुअणकलणाकन्दलिल्लं कुणन्तो
　जादा एणङ्कपादा सअलजलहरम्मुक्कधाराणुआरा ॥ २८ ॥

---

अकुङ्कुममित्यनेन नवोद्गतायास्तस्याः पीतत्वं ध्वन्यते । अचन्दनमित्यनेन चन्दनाधिकशीतलता द्योत्यते । दशब्देन चैकवधूमात्रशोभाकरमण्डनान्तरवैलक्षण्यं द्योत्यते । अकङ्कणमित्यादिना भूषणान्तरवैचित्र्यमस्या अभिव्यज्यते । अशोषणमित्यादिनायुधवैलक्षण्यं चास्या द्योत्यते ।

**विदूषकः**—

भोः, कनकचण्डेन वर्णिता चन्द्रोद्द्योतलक्ष्मीः । तत्सांप्रतं माणिक्यचण्डस्यावसरः ।

**द्वितीयो वैतालिकः**—

दह्यमानागुरुधूपवर्तिकलिका दीयमानदीपोज्ज्वला
　लम्ब्यमानविचित्रमौक्तिकलता मुच्यमानपारावताः ।
सज्जीक्रियमाणमनोज्ञकेलिशयना जल्पद्दूतीशताः
　शय्योत्सङ्गवलन्मानिनीजना वर्तन्ते लीलागृहाः ॥

दह्यमाना अगुरुधूपवर्तय एव कलिका येषु । यद्वा दह्यमानेत्यादि उज्ज्वला इत्यन्तमेकं पदम् । तदा दह्यमानागुरुधूपाश्च ते वर्तिकलिकाभिर्दीयमानदीपोज्ज्वलाश्चेत्यर्थः । अथवा दह्यमानागुरुधूपयुक्तवर्तिकलिकाभिरेव दीयमानदीपोज्ज्वला इत्यर्थः । तदा शोभाधिक्यं व्यज्यते ।

विदूषकः—

दिसवहुत्तंसो णहसरहंसो।
णिहुअणकन्दो पसरइ चन्दो॥ २९॥

कुरङ्गिका—

ससहररइअमरट्टो माणिणिमाणघरट्टो।
णवचम्पअकोदण्डो मअणो जअइ पअण्डो॥ ३०॥

(कर्पूरमञ्जरीं प्रति।) पिअसहि, तुए कदं चन्दवण्णणं महाराअस्स पुरदो पढिस्सम्।

(कर्पूरमञ्जरी लज्जते। कुरङ्गिका पठति।)

मण्डले ससहरस्स गोरए दन्तपञ्जरविलासचोरए।
भादि लञ्छणमिओ फुरन्तओ केलिकोइलतुलं धरन्तओ॥ ३१॥

---

अपि च।

ददतः कर्पूरपूरच्छुरणमिव दिशासुन्दरीणां मुखेषु
श्लक्ष्णां ज्योत्स्नां किरन्तो भुवनजनमनआनन्दनं चन्दनमिव।
जीर्णं कंदर्पकन्दं त्रिभुवनकलनाकन्दलितं कुर्वन्तो
जाता एणाङ्कपादाः सजलजलधरोन्मुक्तधारानुकाराः॥

श्लक्ष्णां कोमलां ज्योत्स्नां किरन्त इति संबन्धः। तादृशास्ते कीदृशा इव कर्पूरपूरच्छुरणं ददत इवेति विशिष्टवैशिष्ट्यन्यायेन संबन्धः। दिशासुन्दरीणामित्युभयत्र संबध्यते। त्रिभुवनेति। विनाकामं कस्यापि सृष्टेरभावात्। कन्दलयन्तः पल्लवयन्तः। इत्यनेन कामिनां कामातिशयजनकत्वं किरणानां व्यङ्ग्यम्। जलधरोन्मुक्तधारासाम्येन मेघाद्यप्रतिहतत्वं तेषु द्योत्यते।

विदूषकः—

दिग्वधूत्तंसो नभःसरोहंसः।
निधुवनकन्दः प्रसरति चन्द्रः॥

कुरङ्गिका—

शशधररचितगर्वो मानिनीमानघरट्टः।
नवचम्पककोदण्डो मदनो जयति प्रचण्डः॥

घरट्टः पेषणकर्ता।

प्रियसखि, त्वया कृतं चन्द्रवर्णनं महाराजस्य पुरतः पठिष्यामि।

राजा—अहो कप्पूरमञ्जरीए अहिणवत्थदंसणम्, रमणीओ सद्दो, उत्तिविचित्तदा, रसणिस्सन्दो अ । (तां प्रति ।)

मा कहिं पि वअणेण विब्भमो होउ इत्ति तुह णूणमिन्दुणा ।
लञ्छणच्छलमसीविसेसओ पेक्ख बिम्बफलए णिए किदो ॥ ३२ ॥

किं च ।

पण्डुरेण जइ रज्जए मुहं कोमलङ्गि खडिआरसेण दे ।
दिज्जए उण कपोलकज्जलं ता लहेदि ससिणो विडम्बणम् ॥ ३३ ॥

(चन्द्रमुद्दिश्य ।)

मुक्कसङ्क हरिणङ्क किं तुमं सुन्दरीपरिसरेण हिण्डसि ।
गोरगण्डपरिपण्डुरत्तणं पेच्छ दिण्णममुणा मुहेण दे ॥ ३४ ॥

---

मण्डले शशधरस्य गौरे दन्तपञ्जरविलासचौरे ।
भाति लाञ्छनमृगः स्फुरन्केलिकोकिलतुलां धारयन् ॥

राजा—

अहो कर्पूरमञ्जर्या अभिनवार्थदर्शनम्, रमणीयः शब्दः, उक्तिविचित्रता, रसनिष्यन्दश्च ।

मा कथमपि वदनेन विभ्रमो भवत्विति तव नूनमिन्दुना ।
लाञ्छनच्छलमषीविशेषकः पश्य बिम्बफलके निजे कृतः ॥

किं च ।

पाण्डुरेण यदि रज्यते मुखं कोमलाङ्गि खटिकारसेन ते ।
दीयते पुनः कपोलकज्जलं तदा लभते शशिनो विडम्बनम् ॥
मुक्तशङ्क हरिणाङ्क किं त्वं सुन्दरीपरिसरेण हिण्डसे ।
गौरगण्डपरिपाण्डुरत्वं पश्य दत्तमसुना मुखेन ते ॥

अनेन सुन्दरीमुखेन ते तुभ्यं गौरगण्डपरिपाण्डुरत्वं दत्तमिति त्वमेव पश्येति वाक्यार्थः कर्म । तादृशसुन्दरीसविधे त्वं किं कुतो न परिभ्रमसि । अत्यनुचितं करोषीति भावः । अत एव साभिप्रायं संबोधनमाह—मुक्तशङ्केति । एतादृशं वस्तु यतः प्राप्तं तत्र भक्तिर्नास्तीति किमुच्यते, शङ्कापि लोकलज्जापि ते नास्तीति महदाश्चर्यमिति भावः । यद्वा यदेकदेशमुखैकदेशेनापि तवैतावद्दत्तं तन्निकटाटनेन विशेषान्तरप्राप्तिरपि संभाव्यते । तदपि त्वं नाचरसीति महानज्ञस्त्वमिति भावः ।

(नेपथ्ये महान्कलकलः। सर्वे आकर्णयन्ति।)

**राजा**—किं उण एस कोलाहलो।

**कर्पूरमञ्जरी**—(ससाध्वसम्।) पिअसहि, एदमवगमिअ आअच्छ।

(कुरङ्गिका निष्क्रम्य प्रविशति।)

**विदूषकः**—देवीए पिअवअस्सस्स वञ्चणा किदेत्ति तक्केमि।

**कुरङ्गिका**—पिअसहि, भट्टारअस्स वञ्चणं अदुअ तुए सह संगमं जाणिअ आअच्छदि देवी। तेण कुज्जवामणकिरातवरिसवरसोविदल्लाणं एस हलहलो।

**कर्पूरमञ्जरी**—(सभयम्।) ता मं पेसदु महाराओ जेणाहमिमिणा सुरङ्गामुहेण ज्जेव्व पविसिअ रक्खाघरअं गच्छेमि। जह देवी महाराएण सह संगमं ण जाणादि।

(इति निष्क्रान्ताः सर्वे।)

इति तृतीयं जवनिकान्तरम्।

---

**राजा**—

किं पुनरेष कोलाहलः।

**कर्पूरमञ्जरी**—

प्रियसखि, एतदवगम्यागच्छ।

एतत्कलकलविषयवस्तु।

**विदूषकः**—

देव्या प्रियवयस्यस्य वञ्चना कृतेति तर्कयामि।

**कुरङ्गिका**—

प्रियसखि, भट्टारकस्य वञ्चनां कृत्वा त्वया सह संगमं ज्ञात्वागच्छति देवी। तेन कुब्जवामनकिरातवर्षवरसौविदल्लानामेष कोलाहलः।

**कर्पूरमञ्जरी**—

तन्मां प्रेषयतु महाराजो येनाहमनेन सुरुङ्गामुखेनैव प्रविश्य रक्षागृहकं गच्छामि। यथा देवी महाराजेन सह संगमं न जानाति।

इति श्रीमद्विद्वद्वृन्दवन्दितारविन्दसुन्दरपदद्वन्द्वकुन्दप्रतिमयशःप्रकरप्रखरकठोरकिरणकरप्रभप्रतिभप्रभाकरभट्टात्मजवासुदेवविरचिते कर्पूरमञ्जरीप्रकाशे तृतीयं जवनिकान्तरं समाप्तम्।

---

## चतुर्थं जवनिकान्तरम् ।

(ततः प्रविशति राजा विदूषकश्च ।)

राजा—अहो, गाढअरो गिम्हो, पवणो अ पअण्डो । ता कधं णु सहिदव्वो । जदो ।

इह कुसुमसरेक्कगोअराणं इदमुभअं वि सुदुःसहं ति मण्णे ।
जरठरइकरालिदो अ कालो तह अ जणेण पिएण विप्पलम्भो ॥ १ ॥

विदूषकः—एक्के दाव मम्महस्स वाहणिज्जा, अण्णे दाव सोसणिज्जा । अह्मारिसो उण जणो ण कामस्स वाहणिज्जो ण तावस्स सोसणिज्जो ।

(नेपथ्ये ।)

ता किं ण खु दे मूलुप्पाडिअचूडिआविअलं सीसं करिस्सम् ।

राजा—(विहस्य ।) वअस्स, लीलावणसच्छन्दचारिणा केलिसुएण किं भणिदम् ।

विदूषकः—(सक्रोधम् ।) आ दासीए उत्त, सूलाअरणजोग्गो सि ।

---

राजा—
अहो, गाढतरो ग्रीष्मः, पवनश्च प्रचण्डः । तत्कथं नु सोढव्यः । यतः ।
इह कुसुमशरैकगोचराणामिदमुभयमपि सुदुःसहमिति मन्ये ।
जरठरविकरालितश्च कालस्तथा च जनेन प्रियेण विप्रलम्भः ॥

विदूषकः—
एके तावन्मदनस्य बाधनीयाः, अन्ये तावच्छोषणीयाः । अस्मादृशः पुनर्जनो न कामस्य बाधनीयो न तापस्य शोषणीयः ।

नेपथ्ये—
तत्किं न खलु ते मूलोत्पाटितचूलिकाविकलं शीर्षं करिष्ये ।

राजा—
वयस्य, लीलावनस्वच्छन्दचारिणा केलिशुकेन किं भणितम् ।

विदूषकः—
आः दास्याः पुत्र, शूलाकरणयोग्योऽसि ।

(नेपथ्ये।)

सव्वं तुह्मारिसाहिन्तो संभाविज्जदि, जइ मे ण होन्ति पक्खावलीओ।

राजा—(विलोक्य।) कहं उड्डीणो ज्जेव्व। (विदूषकं प्रति।)

णिसा तलिनवित्थरा तह दिणेसु वड्ढत्तणं
ससी लहदि खण्डणं तह अ चण्डबिम्बो रई।
णिदाहदिअसेसु विप्फुरदि जस्स एव्वं कमो
कहं ण स विही तदो खुरसिहाइं खण्डिज्जदि॥ २॥

किं च णिउणं सेवणिज्जो जइ सुहसंगमो भोदि। जदो।

मज्झण्णे सिरिखण्डपङ्ककलणा आ संझमोल्लंसुअं
लीलामज्जणमा पदोससमअं साअं सुरा सीअला।
गिम्हे पच्छिमजामिणीणिहुवणं जं किं पि पञ्चेसुणो
एदे पञ्च सिलीमुहा विजइणो सेसा सरा जज्जरा॥ ३॥

---

नेपथ्ये—

सर्वं युष्मादृशेभ्यः संभाव्यते, यदि मे न भवन्ति पक्षावल्यः।

राजा—

कथमुड्डीन एव।

निशास्तलिनविस्तरास्तथा दिनेषु वृद्धत्वं
शशी लभते खण्डनं तथा च चण्डबिम्बो रविः।
निदाघदिवसेषु विस्फुरति यस्यैवं क्रमः
कथं न स विधिस्ततः क्षुरशिखाभिः खण्ड्यते॥

किं च निपुणं सेवनीयो यदि शुभसंगमो भवति।

शुभः संगमो यस्य। तादृशत्वं च स्त्रीयुक्तपुमांसं प्रत्येवेति भावः। शुभः संगमो यस्मिन्निति वा।

यतः।

मध्याह्ने श्रीखण्डपङ्ककलना आ संध्यमार्द्रांशुकं
लीलामज्जनमा प्रदोषसमयं सायं सुरा शीतला।
ग्रीष्मे पश्चिमयामिनीनिधुवनं यत्किमपि पञ्चेषो-
रेते पञ्च शिलीमुखा विजयिनः शेषाः शरा जर्जराः॥

**विदूषकः**—मा एव्वं भण ।

पण्डुच्छविच्छुरिदणाअलदादलाणं
साहारतेल्लपरिपेसलपोफलाणम् ।
कप्पूरपंसुपरिवासिदचन्दणाणं
भद्दं णिदाहदिअसाणँ वअस्स मोदु ॥ ४ ॥

**राजा**—एदं पुण एत्थ रमणिज्जम् ।

सपञ्चमतरङ्गिणो सवणसीअला वेणुणो
समं सिसिरवारिणा वअणसीअला वारुणी ।
सचन्दणघणत्थणी सअणसीअला कामिणी
णिदाहदिअसोसहं सहअसीअलं कस्सवि ॥ ५ ॥

---

ननु कंदर्पस्य पञ्चाधिकानां शराणामेवाभावात्कथं शेषाः शरा जर्जरा इत्युक्तमिति चेन्न, कार्यक्षमपञ्चशरवत्तामात्रादेव पञ्चशरत्वव्यवहारोपपत्तावतिरिक्तशराभावकल्पने मानाभाव इत्यभिप्रायात् । यद्वा पञ्चैवेषवो मदनस्य तथापि कालभेदेनान्यानन्यानुपादत्त इति पूर्वस्वीकृतेषु जर्जरता युक्तैवेति न कोऽपि दोषः ।

**विदूषकः**—
मैवं भण ।

पाण्डुच्छविच्छुरितनागलतादलानां
सहकारतैलपरिपेशलपूगफलानाम् ।
कर्पूरपांसुपरिवासितचन्दनानां
भद्रं निदाघदिवसानां वयस्य भवतु ॥

पाण्डुच्छवीत्यादि हेतुगर्भविशेषणानि । तथा च यत एत एतादृशा अत एषां भद्रं भवत्वित्यर्थः ।

**राजा**—
इदं पुनरत्र रमणीयम् ।

सपञ्चमतरङ्गिणः श्रवणशीतला वेणवः
समं शिशिरवारिणा वदनशीतला वारुणी ।
सचन्दनघनस्तनी शयनशीतला कामिनी
निदाघदिवसौषधं सहजशीतलं कस्यापि ॥

अवि अ।

लीलुत्तंसो सिरीसं सिहिणपरिसरे सिन्दुवाराणँ हारो
अङ्के ओल्लं वरिल्लं रमणपणइणी मेहला उप्पलेहिं।
दोसुं दोकन्दलीसुं णवबिसवलआ कामवेज्जो मणोज्जो
तावातङ्कक्खमाणं महुसमअ गदे एस वेसोबलाणम्॥ ६॥

विदूषकः—अहं उण भणामि—

मज्झण्णलह्णघणचन्दणपङ्किलाणं
साअं णिसेविदणिरन्तरमज्जणाणम्।
सामासु वीअणअवारिकणुक्खिदाणं
दासत्तणं कुणइ पञ्चसरोबलाणम्॥ ७॥

राजा—(स्मरणमभिनीय।)

पच्चङ्गं णवरूअभङ्गिघडणा रम्मे जणे संगमो
जाणं ताण खणं व्व झत्ति दिअहा वट्टन्ति दीहा अपि।

---

कस्यापीत्यपिर्वार्थः। शीतलं यद्वस्तु तन्निदाघदिवसौषधम्। तापशमनायेति शेषः। कस्य वा न भवति। अपि तु सर्वस्यापि भवतीति काकुः।

अपि च।

लीलोत्तंसः शिरीषं स्तनपरिसरे सिन्दुवाराणां हारः
अङ्के आर्द्रं वस्त्रं रमणप्रणयिनी मेखलोत्पलैः।
द्वयोर्दोःकन्दल्योर्नवबिसवलया कामवैद्यो मनोज्ञ-
स्तापातङ्कक्षमाणां मधुसमये गते एष वेषोऽबलानाम्॥

तापसंबन्धिन्यातङ्के क्षमाः समर्थाः। तद्युक्ता इति यावत्। अबलानां कामिनीनाम्, बलरहितानां च।

विदूषकः—

अहं पुनर्भणामि—

मध्याह्नश्लक्ष्णघनचन्दनपङ्किलानां
सायं निषेवितनिरन्तरमज्जनानाम्।
श्यामासु व्यजनजवारिकणोक्षितानां
दासत्वं करोति पञ्चशरोऽबलानाम्॥

जाणं ते अ मणम्मि देन्ति ण रइं चित्तस्स संदाविणो
तार्णं जान्ति जअम्मि दीहरतमा मासोवमा वासरा ॥ ८ ॥

(विदूषकं प्रति ।) वअस्स, अत्थि तग्गदा कावि वत्ता ।

**विदूषकः**—अत्थि । सुणादु पिअवअस्सो । कधेमि सुहासिदं दे । जदो पहुदि कप्पूरमञ्जरी रक्खामवणादो सुरङ्गादुआरे देवीए दिट्ठा, तदो पहुदि तं सुरङ्गादुआरं देवीए बहलसिलासंचएण णीरन्धं कदुअ पिहिदम् । अणङ्गसेणा कलिङ्गसेणा कामसेणा वसन्तसेणा विब्भमसेणेति पञ्च सेणाणामधेआओ चामरधारिणीओ फारप्फुरन्तकरवालहत्थपाइक्कसहस्सेण सह कारामन्दिरस्स रक्खाणिमित्तं पुव्वदिसि णिउत्ताओ ।

अणङ्गलेहा चित्तलेहा चन्दलेहा मिअङ्कलेहा विब्भमलेहेत्ति लेहाणामधेआओ पञ्च सेरन्धीओ पुङ्खिदसिलीमुहधणूहत्थेण णिविडणिवद्धतूणीरदुद्धरेण धाणुक्कसहस्सेण समं दक्खिणाए दिसाए णिवेसिदाओ ।

---

**राजा**—

प्रत्यङ्गं नवरूपभङ्गिघटना रम्ये जने संगमो
येषां तेषां क्षणमिव झटिति दिवसा वर्तन्ते दीर्घा अपि ।
येषां ते च मनसि ददति न रतिं चित्तस्य संतापिन-
स्तेषां यान्ति जगन्ति दीर्घतमा मासोपमा वासराः ॥

वयस्य, अस्ति तद्गता कापि वार्ता ।

**विदूषकः**—

अस्ति । शृणोतु प्रियवयस्यः । कथयामि सुभाषितं ते । यतःप्रभृति कर्पूरमञ्जरी रक्षाभवनात्सुरङ्गाद्वारे देव्या दृष्टा, ततःप्रभृति तत्सुरङ्गाद्वारं देव्या बहुलशिलासंचयेन नीरन्ध्रं कृत्वा पिहितम् । अनङ्गसेना कलिङ्गसेना कामसेना वसन्तसेना विभ्रमसेनेति पञ्च सेनानामधेयाश्चामरधारिण्यः स्फारस्फुरत्करवालहस्तपदातिसहस्रेण सह कारामन्दिरस्य रक्षानिमित्तं पूर्वदिशि नियुक्ताः ।

अनङ्गलेखा चित्रलेखा चन्द्रलेखा मृगाङ्कलेखा विभ्रमलेखेति लेखानामधेयाः पञ्च सैरन्ध्र्यः पुङ्खितशिलीमुखधनुर्हस्तेन निबिडनिबद्धतूणीरदुर्धरेण धानुष्कसहस्रेण समं दक्षिणस्यां दिशि निवेशिताः ।

कुन्दमाला चन्दणमाला कुवलअमाला कञ्चणमाला बउलमाला मङ्ग-लमाला माणिक्कमालेति सत्त मालेत्तिणामधेआओ णवणिसिदकुन्तहत्थ-पाइक्कसहस्सेण समं तम्बूलकरङ्कवाहिणीओ पच्छिमाए दिसाए णिवे-सिदाओ ।

अनङ्गकेली पुक्करकेली कंदप्पकेली सुन्दरकेली कन्दोट्टकेलीति पञ्च केलीत्तिणामधेआओ मज्जणकारिणीओ फलअखग्गकम्पविदुरिल्लेण पा-इक्कसहस्सेण समं उत्तरदिसाए आणत्ताओ ।

ताणं वि उण उवरि मदिरावदी केलिवदी कल्लोलवदी तरङ्गवदी अ-णङ्गवदीत्ति पञ्च वदीत्तिणामधेआओ परिचारिआकुमारीओ कणअचि-त्तदण्डहत्थाओ सुहासिअपाढिआओ बन्दीणामधेआओ सेणाए अद्ध-क्खीकदाओत्ति ।

राजा—अहो देवीए सामग्गी अन्तेउरोचिदा ।

विदूषकः—भो वअस्स, एसा देवीए सारङ्गिआणाम सही किं पि णिवेदिदुं पेसिदा ।

---

कुन्दमाला चन्दनमाला कुवलयमाला काञ्चनमाला बकुलमाला मङ्गलमाला माणिक्यमालेति सप्त मालेतिनामधेया नवनिशितकुन्तहस्तपदातिसहस्रेण समं ताम्बूलकरङ्कवाहिन्यः पश्चिमायां दिशि निवेशिताः ।

अनङ्गकेलिः पुष्करकेलिः कंदर्पकेलिः सुन्दरकेलिः उत्पलकेलिरिति पञ्च केलीति-नामधेया मज्जनकारिण्यः फलकखड्गकम्पभीषणेन पदातिसहस्रेण सममुत्तरदि-श्याज्ञप्ताः ।

तासामपि पुनरुपरि मदिरावती केलिवती कल्लोलवती तरङ्गवती अनङ्गवतीति पञ्च वतीतिनामधेयाः परिचारिकाकुमार्यः कनकचित्रदण्डहस्ताः सुभाषितपाठिका बन्दीनामधेयाः सेनाया अध्यक्षीकृता इति ।

राजा—

अहो देव्याः सामग्र्यन्तःपुरोचिता ।

विदूषकः—

भो वयस्य, एषा देव्या सारङ्गिकानाम सखी किमपि निवेदितुं प्रेषिता ।

(ततः प्रविशति सारङ्गिका ।)

सारङ्गिका—जअदु जअदु भट्टा। देव, देवी विण्णवेदि—अज्ज चतुत्थदिअहे भविअवडसाइत्तीमहूसवोवअरणाइं केलिविमाणप्पासादमारुहिअ पेक्खिदव्वाइं त्ति ।

राजा—जं देवी आणवेदि ।

(चेटी निष्क्रान्ता। उभौ प्रासादाधिरोहणं नाटयतः।)

(ततः प्रविशति चर्चरी।)

विदूषकः—

मोत्ताहलिल्लाहरणुच्चआओ लासावसाणे चलिअंसुआओ ।
सिञ्चन्ति अण्णोण्णमिमीअ पेक्ख जन्ताजलेहिं मणिभाजनेहिं ॥ ९ ॥

इदो अ ।

परिब्भमन्तीअ विचित्तबन्धं इमाइ दोसोलह णच्चणीओ ।
खेलन्ति तालाणुगदप्पदाओ तुहङ्गणे दीसइ दण्डरासो ॥ १० ॥
समांससीसा समबाहुहत्था रेहाविसुद्धा अपरा अ देन्ति ।
पन्तीहिं दोहिं लअतालबन्धं परप्परं साहिमुहा हुवन्ति ॥ ११ ॥

---

सारङ्गिका—

जयतु जयतु भर्ता। देव, देवी विज्ञापयति—अद्य चतुर्थदिवसे भाविवटसावित्रीमहोत्सवोपकरणानि केलिविमानप्रासादमारुह्य प्रेक्षितव्यानीति ।

राजा—

यद्देव्याज्ञापयति ।

विदूषकः—

मुक्ताफलाभरणोच्चया लास्यावसाने चलितांशुकाः ।
सिञ्चन्त्यन्योन्यमिमाः पश्य यन्त्रजलैर्मणिभाजनैः ॥

लास्यावसाने इमा अन्योन्यं सिञ्चन्तीति संबन्धः ।

इतश्च ।

परिभ्रमन्त्यो विचित्रबन्धं इमा द्विषोडश नर्तक्यः ।
खेलन्ति तालानुगतपदास्तवाङ्गणे दृश्यते दण्डरासः ॥
समांसशीर्षाः समबाहुहस्ता रेखाविशुद्धा अपराश्च ददति ।
पङ्क्तिभ्यां द्वाभ्यां लयतालबन्धं परस्परं साभिमुखा भवन्ति ॥

मोत्तूण अण्णा मणिवारआइं जन्तेहिं धारासलिलं खिवन्ति ।
पडन्ति ताआ अ पिआणमङ्के मणोहुओ वारुणबाणकप्पा ॥ १२ ॥
इमा मसीकज्जलकालकाआ तिकण्डचावा अ विलासिणीओ ।
पुलिन्दरूवेण जणस्स हासं समोरपिच्छाहरणा कुणन्ति ॥ १३ ॥
हत्थे महामंसबलीधराओ हुंकारफेक्काररवा रउद्दा ।
णिसाअरीणं पडिसीसएहिं अण्णा मसाणाभिणअं कुणन्ति ॥ १४ ॥
कावि वादिदकरालहुडुक्का रम्ममद्दलरएण मिअच्छी ।
भूलदाहिं पडिवाडिचलाहिं चेदिकम्मकरणम्मि पअट्टा ॥ १५ ॥
किङ्किणीकदरणज्झणसद्दा कण्ठगीदलअजन्तिदताला ।
जोगिणीवलअणच्चणकेलिं तालणेउररअं विरअन्ति ॥ १६ ॥
कोउहल्लवसचञ्चलवेसा वेणुवादणपरा अवराओ ।
कालवेसवसहासिदलोआ ओसरन्ति पणमन्ति हसन्ति ॥ १७ ॥

(प्रविश्य ।)

सारङ्गिका—(पुरोऽवलोक्य ।) एसो महाराओ पुणो मरगअपुञ्जं जेव्व गदो । कदलीघरं अ अणुप्पइट्टो । ता अग्गदो गदुअ देवीविण्णविअं वि-

---

मुक्त्वा अन्या मणिवारणानि यन्त्रैर्धारासलिलं क्षिपन्ति ।
पतन्ति ताश्च प्रियाणामङ्के मनोभुवो वारुणबाणकल्पाः ॥
इमा मषीकज्जलश्यामकायास्त्रिकाण्डचापाश्च विलासिन्यः ।
पुलिन्दरूपेण जनस्य हासं समयूरपिच्छाभरणाः कुर्वन्ति ॥
हस्ते महामांसबलिधारिण्यो हुंकारफेत्काररवा रौद्राः ।
निशाचरीणां प्रतिशीर्षकैरन्याः श्मशानाभिनयं कुर्वन्ति ॥
कापि वादितकरालहुडुक्का रम्यमर्दलरवेण मृगाक्षी ।
भ्रूलताभ्यां परिपाटीचलाभ्यां चेटीकर्मकरणे प्रवृत्ता ॥
किङ्किणीकृतरणज्झणशब्दाः कण्ठगीतलययन्त्रिततालाः ।
योगिनीवलयनर्तनकेलिं तालनूपुररवं विरचयन्ति ॥
कौतूहलवशचञ्चलवेषा वेणुवादनपरा अपराः ।
कालवेषवशहासितलोका अपसरन्ति प्रणमन्ति हसन्ति ॥

ण्णवेमि । (उपसृत्य ।) जअदु जअदु देवो । देवी एदं विण्णवेदि जधा संझासमए जूअं मए परिणेदव्वा ।

विदूषकः—भो, किं एदं अकालकोहण्डपडणम् ।

राजा—सारङ्गिए, सव्वं वित्थरेण कधेहि ।

सारङ्गिका—एवं विण्णवीअदि, अणन्तरातिक्कन्तचउद्दसीदिअहे देवीए पोम्मराअमणिमई गोरी कदुअ भेरवाणन्देण पडिट्ठाविदा । सअं अ दिक्खा गहिदा । तदो ताए विण्णत्तो जोगीसरो गुरुदक्खिणाणिमित्तम् । भणिदं च तेण जइ अवस्सं । गुरुदक्खिणा दादव्वा ता एसा दीअदु महाराअस्स । तदो देवीए विण्णत्तं जं आदिसदि भअवं । पुणो वि उल्लविदं तेण । अत्थि एत्थ लाटदेसे चण्डसेणो णाम राजा । तस्स दुहिदा घणसारमञ्जरी णाम । सा देवण्णेहिं आदिट्ठा एसा चक्कवट्टिघरिणी भविस्सदि त्ति । तदो महाराअस्स परिणेदव्वा । तेण गुरु-

---

सारङ्गिका—

एष महाराजः पुनर्मरकतपुञ्जमेव गतः । कदलीगृहं चानुप्रविष्टः । तदग्रतो गत्वा देवीविज्ञापितं विज्ञापयामि । जयतु जयतु देवः । देवीदं विज्ञापयति यथा संध्यासमये यूयं मया परिणेतव्याः ।

विदूषकः—

भोः, किमेतदकालकूष्माण्डपतनम् ।

राजा—

सारङ्गिके, सर्वं विस्तरेण कथय ।

सारङ्गिका—

एवं विज्ञाप्यते, अनन्तरातिक्रान्तचतुर्दशीदिवसे देव्या पद्मरागमणिमयी गौरी कृत्वा भैरवानन्देन प्रतिष्ठापिता । स्वयं च दीक्षा गृहीता । ततस्तया विज्ञप्तो योगीश्वरो गुरुदक्षिणानिमित्तम् । भणितं च तेन यद्यवश्यं गुरुदक्षिणा दातव्या तदेषा दीयतां महाराजस्य । ततो देव्या विज्ञप्तं यदादिशति भगवान् । पुनरप्युल्लपितं तेन । अस्त्यत्र लाटदेशे चण्डसेनो नाम राजा । तस्य दुहिता घनसारमञ्जरी नाम । सा दैवज्ञैरादिष्टा एषा चक्रवर्तिगृहिणी भविष्यतीति । ततो महाराजस्य परिणेतव्या । तेन गुरुदक्षिणा दत्ता भवति

दक्खिणा दिण्णा भोदि। भट्टा वि चक्कवट्टी किदो भोदि। तदो देवीए विहसिअ भणिअं जं आदिसदि भअवं। अहं च विण्णविदुं पेसिदा गुरुस्स गुरुदक्खिणाणिमित्तम्।

**विदूषकः**—(विहस्य।) एदं तं संविधाणअं सीसे सप्पो देसन्तरे वेज्जो। इह अज्ज विवाहो लाटदेसे घणसारमञ्जरी।

**राजा**—किं ते भैरवाणन्दस्स प्पहाओ ण पच्चक्खो। (तां प्रति।) कहिं संपदं भैरवाणन्दो।

**सारङ्गिका**—देवीकारिदपमदुज्जाणस्स मज्झट्ठिदवडतरुमूले चामुण्डाअदणे भैरवाणन्दो देवी अ आगमिस्सदि। ता अज्ज दक्खिणाविहिदो कोऊहलपरो विवाहो। ता इह ज्जेव्व देवेण ठादव्वम्। (इति परिक्रम्य निष्क्रान्ता।)

**राजा**—वअस्स, सव्वं एदं भैरवाणन्दस्स विजम्भिदं त्ति तक्केमि।

**विदूषकः**—एव्वं णेदम्। ण हु मअलञ्छणमन्तरेण अण्णो मिअङ्कमणिपुत्तलिअं पस्सवएदि। ण हु सरअसमीरमन्तरेण सेहालिआकुसुमुक्करं विकासेदि।

---

भर्तापि चक्रवर्ती कृतो भवति। ततो देव्या विहस्य भणितं यदादिशति भगवान्। अहं च विज्ञापयितुं प्रेषिता गुरोर्गुरुदक्षिणानिमित्तम्।

**विदूषकः**—

एतत्तत्संविधानकं शीर्षे सर्पो देशान्तरे वैद्यः। इहाद्य विवाहो लाटदेशे धनसारमञ्जरी।

**राजा**—

किं ते भैरवानन्दस्य प्रभावो न प्रत्यक्षः। कुत्र सांप्रतं भैरवानन्दः।

**सारङ्गिका**—

देवीकारितप्रमदोद्यानस्य मध्यस्थितवटतरुमूले चामुण्डायतने भैरवानन्दो देवी चागमिष्यति। तदद्य दक्षिणाविहितः कौतूहलपरो विवाहः। तदिहैव देवेन स्थातव्यम्।

**राजा**—

वयस्य, सर्वमेतद्भैरवानन्दस्य विजृम्भितमिति तर्कयामि।

(ततः प्रविशति भैरवानन्दः ।)

**भैरवानन्दः**—इअं सा वडतरुमूले णिब्भिण्णस्स सुरङ्गादुआरस्स पिहाणं चामुण्डा । (हस्तेन प्रणम्य पठति ।)

कप्पन्तकेलिभवणे कालस्स पुराणरुहिरसुरम् ।
जअदि पिअन्ती चण्डी पम्मेट्ठिकवालचसएण ॥ १८ ॥

(प्रविश्योप्रविश्य ।) अज्जवि ण णिग्गच्छदि सुरङ्गादुआरेण कप्पूरमञ्जरी ।

(ततः प्रविशति सुरङ्गोद्घाटितकेन कर्पूरमञ्जरी ।)

**कर्पूरमञ्जरी**—भअवं, पणमिज्जसि ।

**भैरवान्दः**—उइदं वरं लहेसु । इह जेव्व उवविससु ।

(कर्पूरमञ्जरी तथा करोति ।)

**भैरवानन्दः**—(स्वगतम् ।) अज्ज वि ण आअच्छदि देवी ।

(प्रविश्य ।)

**राज्ञी**—(परिक्रम्यावलोक्य च ।) इअं भअवदी चामुण्डा । (प्रणम्यावलोक्य च ।) अए, इअं कप्पूरमञ्जरी । ता किं णेदम् । (भैरवानन्दं प्रति ।)

---

**विदूषकः**—

एवमेतत् । न खलु मृगलाञ्छनमन्तरेणान्यो मृगाङ्कमणिपुत्तलीं प्रस्वेदयति । न खलु शरत्समीरमन्तरेण शेफालिकाकुसुमोत्करं विकासयति ।

**भैरवानन्दः**—

इयं सा वटतरुमूले निर्भिन्नस्य सुरङ्गाद्वारस्य पिधानं चामुण्डा ।

कल्पान्तकेलिभवने कालस्य पुराणरुधिरसुराम् ।
जयति पिबन्ती चण्डी परमेष्ठिकपालचषकेण ॥

अद्यापि न निर्गच्छति सुरङ्गाद्वारेण कर्पूरमञ्जरी ।

**कर्पूरमञ्जरी**—

भगवन्, प्रणम्यसे ।

**भैरवानन्दः**—

उचितं वरं लभस्व । इहैवोपविश ।

**भैरवानन्दः**—

अद्यापि नागच्छति देवी ।

इदं विण्णवीअदि, णिअभवणे कदुअ विवाहसामग्गिं आअदह्मि। तदो तं गेह्णिअ आगमिस्सम्।

भैरवानन्दः—वच्छे, एवं करीअदु।

(राज्ञी व्यावृत्य परिक्रामति।)

भैरवानन्दः—(विहस्य। स्वगतम्।) इअं कप्पूरमञ्जरीठाणं अण्णेसिदुं गदा। (प्रकाशम्।) पुत्ति कप्पूरञ्जरि, सुरङ्गादुआरेण ज्जेव्व तुरितपदं गदुअ सट्ठाणे चिट्ठ। देवीआगमणे पुणो आगन्तव्वम्।

(कर्पूरमञ्जरी तथा करोति।)

देवी—एदं रक्खागेहम्। (प्रविश्यावलोक्य च।) अए, इअं कप्पूरमञ्जरी। सा का वि सरिच्छा मए दिट्ठा। वच्छे कप्पूरमञ्जरि, कीरिसं दे सरीरम्। (आकाशे।) किं भणसि मह सरीरे वेअणा।

---

राज्ञी—

इयं भगवती चामुण्डा। अये, इयं कर्पूरमञ्जरी। तत्किमिदम्। इदं विज्ञाप्यते, निजभवने कृत्वा विवाहसामग्रीमागतास्मि। ततस्तां गृहीत्वागमिष्यामि।

भैरवानन्दः—

वत्से, एवं क्रियताम्।

भैरवानन्दः—

इयं कर्पूरमञ्जरीस्थानमन्वेष्टुं गता। पुत्रि कर्पूरमञ्जरि, सुरङ्गाद्वारेणैव त्वरितपदं गत्वा स्वस्थाने तिष्ठ। देव्यागमने पुनरागन्तव्यम्।

देवी—

इदं रक्षागृहम्। अये, इयं कर्पूरमञ्जरी। सा कापि सदृशा मया दृष्टा। वत्से कर्पूरमञ्जरि, कीदृशं ते शरीरम्।

आकाश इति। 'किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत्। श्रुत्वेवानुक्तमपि चेत्तत्स्यादाकाशभाषितम्॥' इति भरतः।

किं भणसि मम शरीरे वेदना।

**राज्ञी**—(स्वगतम् ।) ता पुणो तहिं गमिस्सम् । (प्रविश्य पार्श्वतोऽवलोक्य च ।) हला सहीओ, विवाहोवकरणाइं लहु गेह्णिअ आअच्छध । (इति परिक्रामति ।)

(प्रविश्य कर्पूरमञ्जरी तथैवास्ते ।)

**राज्ञी**—(पुरोऽवलोक्य ।) इअं कप्पूरमञ्जरी ।

**भैरवानन्दः**—वच्छे विब्भमलेहे, आणीदाइं विवाहोवअरणाइं ।

**देवी**—आणीदाइं । किं उण घणसारमञ्जरीसमुचिदाइं आहरणाइं विसुमरिदाइं । ता पुणो गमिस्सम् ।

**भैरवानन्दः**—एवं करीअदु ।

(देवी नाटितकेन निष्क्रामति ।)

**भैरवानन्दः**—पुत्ति कप्पूरमञ्जरि, तह ज्जेव्व करीअदु ।

(कर्पूरमञ्जरी निष्क्रान्ता ।)

---

राज्ञी—

तत्पुनस्तत्र गमिष्यामि । हला सख्यः, विवाहोपकरणानि लघु गृहीत्वागच्छत ।

राज्ञी—

इयं कर्पूरमञ्जरी ।

भैरवानन्दः—

वत्से विभ्रमलेखे, आनीतानि विवाहोपकरणानि ।

देवी—

आनीतानि । किं पुनर्घनसारमञ्जरीसमुचितान्याभरणानि विस्मृतानि । तत्पुनर्गमिष्यामि ।

भैरवानन्दः—

एवं क्रियताम् ।

भैरवानन्दः—

पुत्रि कर्पूरमञ्जरि, तथैव क्रियताम् ।

**राज्ञी**—(रक्षागृहं प्रविश्य कर्पूरमञ्जरीं दृष्ट्वा।) अए, सारिच्छएण विडम्बिदह्मि। (स्वगतम्।) झाणविमाणेण णिव्विग्घपरिसप्पिणा तामाणेदि महाजोई। (प्रकाशम्।) सहीओ, जं जं णिवेदिदं तं तं गेह्णिअ आअच्छध। (चामुण्डायतनप्रवेशनाटितकेन तामवलोक्य।) अहो सारिच्छअम्।

**भैरवानन्दः**—देवि, उवविस। महाराओ वि आअदो ज्जेव्व वट्टदि।

(ततः प्रविशति राजा विदूषकः कुरङ्गिका च।)

**भैरवानन्दः**—आसणं महाराअस्स।

(सर्वे यथोचितमुपविशन्ति।)

**राजा**—(नायिकां प्रति।) एसा सरीरिणी मअरद्धअपालिद्धिआ देहान्तरेण संठिदा सिङ्गाररसलच्छीव। दिअससंचारिणी पुण्णिमाअन्दचन्दिआ अवि अ पगुणगुणमाणिक्कमञ्जूसा। रअणमई अञ्जणसलाआ। तधा अ एसा रअणकुसुमणिप्पण्णा महुलच्छी। किं च।

---

**राज्ञी**—

अये, सादृश्येन विडम्बितास्मि। ध्यानविमानेन निर्विघ्नपरिसर्पिणा तामानयति महायोगी। सख्यः, यद्यन्निवेदितं तत्तद्गृहीत्वागच्छत। अहो सादृश्यम्।

**भैरवानन्दः**—

देवि, उपविश। महाराजोऽप्यागत एव वर्तते।

**भैरवानन्दः**—

आसनं महाराजस्य।

**राजा**—

एषा शरीरिणी मकरध्वजपापर्द्धिका देहान्तरेण संस्थिता शृङ्गाररसलक्ष्मीव। दिवससंचारिणी पूर्णिमाचन्द्रिका। अपि च प्रगुणगुणमाणिक्यमञ्जूषा। रत्नमय्यञ्जनशलाका। तथा चैषा रत्नकुसुमनिष्पन्ना मधुलक्ष्मीः।
किं च।

---

१. 'प्रारब्धि' इति कामराजकृतटीकायाम्; 'प्रतिस्पर्धिका' इति पुस्तकान्तरे; 'पापर्द्धिका मृगया' इत्येकस्मिन्मूलपुस्तके टिप्पणम्.

भुअणजअवडाआ रूअसोहा इमीए
जह जह णअणाणं गोअरे जस्स आदि ।
वसइ मअरकेदू तस्स चित्ते विचित्तो
वलइदधणुदण्डो पुङ्खिदेहिं सरेहिं ॥ १९ ॥

**विदूषकः**—(जनान्तिकम् ।) सच्चं कदं तुए आभाणकम् । तडं गदाए वि णौकाए ण विस्ससीदव्वम् । ता तुह्णीं चिट्ठ ।

**राज्ञी**—(कुरङ्गिकां प्रति ।) तुमं महाराअस्स णेवच्छं कुरु । सारङ्गिआ घणसारमञ्जरीए करेदु ।

(इत्युभे उभयोर्विवाहनेपथ्यकरणं नाटयतः ।)

**भैरवानन्दः**—उवज्झाओ हक्कारीअदु ।

**राज्ञी**—अज्जउत्त, एसो उवज्झाओ अज्जकविञ्जलओ चिट्ठदि । ता करेदु अग्गिआरिअम् ।

---

भुवनजयपताका रूपशोभास्या
यथा यथा नयनयोर्गोचरं यस्य याति ।
वसति मकरकेतुस्तस्य चित्ते विचित्रो
वलयितधनुर्दण्डः पुङ्खितैः शरैः ॥

**विदूषकः**—
सत्यं कृतं त्वयाभाणकम् । तटं गताया अपि नौकाया न विश्वसितव्यम् । तत्तूष्णीं तिष्ठ ।

**राज्ञी**—
त्वं महाराजस्य नेपथ्यं कुरु । सारङ्गिका घनसारमञ्जर्याः करोतु ।

**भैरवानन्दः**—
उपाध्याय आकार्यताम् ।

**राज्ञी**—
आर्यपुत्र, एष उपाध्याय आर्यकपिञ्जलस्तिष्ठति । तत्करोत्वग्न्याचार्यकम् ।

**विदूषकः**—एस सज्जोह्मि । भो वअस्स, उत्तरीए गण्ठिं दाइस्सम् । दाव हत्थेण हत्थं गेह्ण कप्पूरमञ्जरीए ।

**राज्ञी**—(सचमत्कारकम् ।) कुदो कप्पूरमञ्जरी ।

**भैरवानन्दः**—(तं तस्या भावमुपलभ्य विदूषकं प्रति ।)तुमं सुट्ठुतरं भुल्लोसि । जदो कप्पूरमञ्जरीय घणसारमञ्जरीति णामन्तरं जाणासि ।

**राजा**—(करमादाय ।)

जे कण्टआ तिउसमुद्धफलाणँ सन्ति
जे केअईकुसुमगब्भदलावलीसु ।
फंसेण णूणमिह मज्झ सरीरअस्स
ते सुन्दरीअ बहला पुलअङ्कुराओ ॥ २० ॥

**विदूषकः**—भो वअस्स, भामरीओ दिज्जदु । हुअवहे लाजञ्जलीओ खिवीअदु ।

---

**विदूषकः**—

एष सज्जोऽस्मि । भो वयस्य, उत्तरीये ग्रन्थिं दास्यामि । तावद्धस्तेन हस्तं गृहाण कर्पूरमञ्जर्याः ।

**राज्ञी**—

कुतः कर्पूरमञ्जरी ।

**भैरवानन्दः**—

त्वं सुष्ठुतरं भ्रान्तोऽसि । यतः कर्पूरमञ्जर्या घनसारमञ्जरीति नामान्तरं जानासि ।

**राजा**—

ये कण्टकास्त्रपुसमुग्धफलानां सन्ति
ये केतकीकुसुमगर्भदलावलीषु ।
स्पर्शेन नूनमिह मम शरीरस्य
ते सुन्दर्या बहलाः पुलकाङ्कुराः ॥

**विदूषकः**—

भो वयस्य, भ्रामर्यो दीयन्ताम् । हुतवहे लाजाञ्जलयः क्षिप्यन्ताम् ।

(राजा भ्रमणं नाटयति। नायिका धूमेन व्यावृतमुखी तिष्ठति। राजा परिणयति। राज्ञी सपरिवारा निष्क्रान्ता।)

**भैरवानन्दः**—विवाहे दक्खिणा दिज्जदु आचारिअस्स।

**राजा**—दिज्जदु। वअस्स, गामसअं ते दिण्णम्।

**विदूषकः**—सोत्थि होदु। (इति नृत्यति।)

**भैरवानन्दः**—महाराअ, किं ते पुणो वि पिअं कुणोमि।

**राजा**—जोईसर, किमवरं पिअं वट्टदि। जदो

कुन्तलेसरसुआकरफंसप्फारसौक्खसिढिलीकिदसग्गो।
पालएमि वसुहातलरज्जं चक्कवट्टिपअवीरमणिज्जम्॥ २१॥

---

**भैरवानन्दः**—

विवाहे दक्षिणा दीयत आचार्यस्य।

**राजा**—

दीयते। वयस्य, ग्रामशतं ते दत्तम्।

**विदूषकः**—

स्वस्ति भवतु।

**भैरवानन्दः**—

महाराज, किं ते पुनरपि प्रियं करोमि।

**राजा**—

योगीश्वर, किमपरं प्रियं वर्तते। यतः

कुन्तलेश्वरसुताकरस्पर्शस्फारसौख्यशिथिलीकृतस्वर्गः।
पालयामि वसुधातलराज्यं चक्रवर्तिपदवीरमणीयम्॥

तहावीदं होदु दाव।

सत्थो णन्ददु सज्जणाणँ सअलो वग्गो खलाणं पुणो
णिच्चं खिज्जदु होदु बह्मणजणो सच्चासिहो सव्वदा।
मेहो मुञ्चदु संचिदं वि सलिलं सस्सोचिअं भूअले
लोओ लोहपरम्मुहोणुदिअहं धम्मे मई होदु अ॥ २२॥

(इति निष्क्रान्ताः सर्वे।)

इति चतुर्थं जवनिकान्तरम्।

---

तथापीदं भवतु तावत्।

सार्थो नन्दतु सज्जनानां सकलो वर्गः खलानां पुन-
र्नित्यं खिद्यतु भवतु ब्राह्मणजनः सत्याशीः सर्वदा।
मेघो मुञ्चतु संचितमपि सलिलं सस्योचितं भूतले
लोको लोभपराङ्मुखोऽनुदिवसं धर्मे मतिर्भवतु च॥

इति श्रीमद्विद्वद्वृन्दवन्दितारविन्दसुन्दरपदद्वन्द्वकुन्दप्रतिमयशःप्रकरप्रखरकठोर-
किरणकरप्रभप्रतिभप्रभाकरभट्टात्मजवासुदेवविरचिते कर्पूरमञ्जरी-
प्रकाशे चतुर्थं जवनिकान्तरं समाप्तम्।

समाप्तोऽयं ग्रन्थः।



# काव्यमाला।

## महाकविश्रीराजशेखरप्रणीतं

## बालभारतम्[1]।

### प्रथमोऽङ्कः।

नमः शिवाय संसारसरोजस्य रजस्विनः।
विकासाश्चर्यसूर्याय संकोचसकलेन्दवे ॥ १ ॥

अपि च।

ये सीमन्तितगात्रभस्मरजसो ये कुम्भकद्वेषिणो
ये लीढाः श्रवणाश्रयेण फणिना ये चन्द्रशैत्यद्रुहः।
ये कुप्यद्गिरिजाविभक्तवपुषश्चित्तव्यथासाक्षिणः
शंभोर्दक्षिणनासिकापुटभुवः श्वासानिलाः पान्तु वः ॥ २ ॥

(नान्द्यन्ते)

सूत्रधारः—(परिक्रम्य विचिन्त्य च।) अहो किमपि कमनीया कवेरात्मन्याशीः।

आद्यः कन्दो वेदविद्यालतानां जैह्वयं चक्षुर्निर्निमेषं कवीनाम्।
यो येनार्थी तस्य तत्प्रक्षरन्ती वाङ्मूर्तिर्मे देवता संनिधत्ताम् ॥ ३ ॥

व्यासो वैखानसवृषा सत्यः सत्यवतीसुतः।
भारतीं भारतकविर्देयाद्द्वैपायनो मम ॥ ४ ॥

(विमृश्य च।) अहो मसृणोद्धता सरस्वती यायावरस्य। यदाह—

ब्रह्मभ्यः शिवमस्तु वस्तु विततं किंचिद्वयं ब्रूमहे
हे सन्तः शृणुतावधत्त च धृतो युष्मासु सेवाञ्जलिः।
यद्वा किं विनयोक्तिभिर्मम गिरां यद्यस्ति सूक्तामृतं
माद्यन्ति स्वयमेव तत्सुमनसो याच्ञा परं दैन्यभूः ॥ ५ ॥

---

1. अस्य नाटकस्य प्रचण्डपाण्डवमित्यपि नामान्तरम्. अस्याङ्कद्वयमेव लब्धमस्माभिः.

(पुरोऽवलोक्य च ।) कथमेते महोदयमहानगरलीलावतंसा विद्वांसः सामाजिकाः । तदेवं विज्ञापयामि । (अञ्जलिं बद्ध्वा ।)

सा शुक्तिर्मधुपानकेलिचषकं वेणीविभूषामणिः
सीतायाः स च कुम्भसंभवमुनेः प्राप्ता च सैकावली ।
पर्यङ्कः स च विद्रुमद्रुममयस्तद्रामसिंहासनं
चिह्नं यस्य यशोनिधिर्विजयतां सोऽयं रघोरन्वयः ॥ ६ ॥

तत्र च ।

नमितमुरलमौलिः पाकलो मेकलानां
रणकलितकलिङ्गः केलितट् केरलेन्दोः ।
अजनि जितकुलूतः कुन्तलानां कुठारो
हठहृतरमठश्रीः श्रीमहीपालदेवः ॥ ७ ॥

तेन च रघुवंशमुक्तामणिना आर्यावर्तमहाराजाधिराजेन श्रीनिर्भयनरेन्द्रनन्दनेनाधिकृताः सभासदः, सर्वानेष वो गुणाकरः सप्रश्रयं विज्ञापयति—विदितमेतत्तु भवताम्, यदुत नाट्याचार्येण रङ्गविद्याधरेण प्रतिज्ञातम्—

राजशेखरकवेर्महात्मनो बालभारतमिदं हि नाटकम् ।
योऽभिनेष्यति रसैर्निरन्तरं मत्सुतां स परिणेष्यति क्षितौ ॥ ८ ॥

(आकाशे ।) तत्रभवन्तः, किं ब्रूथ—इदं हि तद्बालभारतं यस्य हि प्रचण्डपाण्डवमिति नामान्तरम् । (अञ्जलिं बद्ध्वा ।) यदादिशन्ति परिषदग्रेसराः । (किंचित्सलज्जम् ।) भवदनुचराः पञ्चभ्रातरो वयम्, पञ्चापि नाम समर्थास्तदभिनयने,

---

१. महोदयमिति कान्यकुब्जनगरस्य नामान्तरम्. २. मुरल-मेकल-कलिङ्ग-केरल-कुलूत कुन्तल-रमठाख्या देशविशेषाः. ३. पाकलो हस्तिज्वरः. 'गान्धाराधिपगन्धद्विपपाकलः' इति हर्षचरितम्. 'कलभं कठोर इव कूटपाकलः' इति मालतीमाधवे भवभूतिः। पाकल एव कूटपाकलः. ४. आदिष्टोऽसि—श्रीमहीपालदेवेन, यस्येमां पुराविदः प्रशस्तिगाथामुदाहरन्ति—'यः संसृत्य प्रकृतिगहनामार्यचाणक्यनीतिं जित्वा नन्दान्कुसुमनगरं चन्द्रगुप्तो जिगाय । कर्णाटत्वं ध्रुवमुपगतानद्य तानेव हन्तुं दोर्दर्पाढ्यः स पुनरभवच्छ्रीमहीपालदेवः ॥' इति चण्डकौशिके आर्यक्षेमीश्वरः. स एवायमपि महीपालदेव इति तु न निश्चयः.

किं पुनरस्माकं पितृव्यपुत्राः शतं सन्ति भरतपुत्राः । ते च तदभिनेतुमिच्छन्ति, न च ते शक्नुवन्ति । तन्निमित्तं च महदस्माभिः सह वैरं वर्तते । (आकाशे ।) किं ब्रूथ—एकविषयाभिलाषो हि वैरकन्दं कन्दलयति । भवद्भिः कुलान्तकरं वैरं तेषाम् । यतो दुर्बुद्धयस्ते, सुबुद्धयो भवन्तः । उक्तं हि तेनैव महासुमन्त्रिपुत्रेण—

श्रियः प्रसूते विपदो रुणद्धि यशांसि दुग्धे मलिनं प्रमार्ष्टि ।
संस्कारशौचेन परं पुनीते शुद्धा हि बुद्धिः कुलकामधेनुः ॥ ९ ॥

(अञ्जलिं बद्ध्वा ।) सुगृहीतमार्यवचनम् । बद्धो वाससो ग्रन्थिः । यदित्थमामनन्ति—

अनूचानो हि यद्ब्रूते सा स्वयंभूः सरस्वती ।
तदार्षं न मृषार्थं स्यात्सा दृष्टिर्विदुषां दृढा ॥ १० ॥

अपि च ।

आपन्नार्तिहरः पराक्रमधनः सौजन्यवारांनिधि-
स्त्यागी सत्यसुधाप्रवाहशशभृत्कान्तः कवीनां मतः ।
वर्ण्यं वा गुणरत्नरोहणगिरेः किं तस्य साक्षादसौ
देवो यस्य महेन्द्रपालनृपतिः शिष्यो रघुग्रामणीः ॥ ११ ॥

तत्रैवंविधो दैवज्ञानां प्रवादः—

बभूव वल्मीकभवः पुरा कविस्ततः प्रपेदे भुवि भर्तृमेण्ठताम् ।
स्थितः पुनर्यो भवभूतिरेखया स वर्तते संप्रति राजशेखरः ॥ १२ ॥

(आकाशे ।) किं ब्रूथ—तत्प्रस्तूयतामिति । यदादिशन्ति गुरवः ।

(नेपथ्ये गीयते ।)

हरचूडामणिरिन्दुस्त्रिजगद्दीपश्च दिनकरो देवः ।
मासान्तसंगताविह लोकस्य हिताय वर्तेते ॥ १३ ॥

**सूत्रधारः**—(आकर्ण्य ।) कथमुपक्रान्तमेव कुशीलवैः । यद्वाल्मीकिव्यासयोः प्रावेशिकी ध्रुवा गीयते । (विचिन्त्य ।) ध्रुवा हि नाट्यस्य प्रथमे प्राणाः । यतः ।

प्रथयति पात्रविशेषान्सामाजिकजनमनांसि रञ्जयति ।
अनुसंदधाति च रसान्नाट्यविधाने ध्रुवा गीतिः ॥ १४ ॥

तद्भवतु ! अहमप्यनन्तरकरणीयाय सज्जो भवामि । (इति निष्क्रान्तः ।)

प्रस्तावना ।

---

(ततः प्रविशति वाल्मीकिर्व्यासश्च ।)

व्यासः—(उपादोपग्रहम् ।) भगवन् अद्भुतसंभव, एष व्यासः पाराशर्योऽभिवादयते ।

वाल्मीकिः—(पृष्ठे पाणिं निधाय ।) वत्स सात्यवतेय, स्वप्रबन्धपरिसमाप्त्या वर्धस्व ।

व्यासः—परमनुगृहीतोऽस्मि । (अञ्जलिं बद्ध्वा ।)

योगीन्द्रश्छन्दसां द्रष्टा रामायणमहाकविः ।
वाल्मीकजन्मा जयति प्राच्यः प्राचेतसो मुनिः ॥ १५ ॥

वाल्मीकिः—अष्टादशपुराणसारसंग्रहकारिन्, कियान्वर्तते नवेतिहासो भारतम् ।

व्यासः—पुनः पुनरविनयोद्घाटनेन मा लज्जयतु मामुपाध्यायः । के वयं नाम रामायणमहाकवेः पुरतः ।

ये विद्यापरमेश्वराः स्तुतधियो ये ब्रह्मपारायणे
येषां वेदवदादृता स्मृतिमयी वाग्लोकयात्राविधौ ।
स्नाताः स्वर्गतरङ्गिणीमपि सदा पूतां पुनस्त्यत्र ये
व्युत्पत्त्या परया रसोपनिषदां रामायणस्यास्य ते ॥ १६ ॥

किं च भगवन्प्रथमकवे,

यदुक्तिमुद्रासुहृदर्थवीथी कथारसो यच्चुलुकैश्चुलुम्प्यः ।
तथामृतस्यन्दि च यद्वचांसि रामायणं तत्कवितॄन्पुनाति ॥ १७ ॥

वाल्मीकिः—वत्स कृष्णद्वैपायन, कस्य पुनः कवेर्वाचो भारतस्य षोडशीमपि कलां कलयन्ति । यतः ।

धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् ॥ १८ ॥

---

१. अयं श्लोको महाभारते वर्तते.

किं च।

दन्तोलूखलिभिः शिलोञ्छिभिरिदं कन्दाशनैः फेनपैः
पर्णप्राशनिभिर्भिताम्बुकवलैः काले च पक्वाशिभिः।
नीवारप्रसृतिंपचैश्च मुनिभिर्यद्वा त्रयीध्यायिभिः
सेव्यं भव्यमनोभिरर्थपतिभिस्तद्वै महाभारतम् ॥ १९ ॥

किं तु श्रुतमस्माभिर्यदुताविविरसे काव्यकष्टेऽभिनिविष्टोऽसि।

व्यासः—इदमुपाध्यायपादेभ्यो विज्ञाप्यते—

विनायको यः शिवयोरपत्यमर्धं पुमानर्धमिभश्च देवः।
स वर्तते भारतसंहितायां वृतस्तपोभिर्मम लेखकोऽत्र ॥ २० ॥

तेन च च्छलयितुमहमुपक्रान्तः—यदुत बाढमहं ते लिपिकारः, किं पुनर्येन रंहसा लिखेयं तेन यदि [न] संदभसे तत्ते विघ्नः स्यात्। ततो मयापि प्रतिच्छलितः—ओमित्यस्तु। किं पुनर्भवता भावयता लिखितव्यमिति। अतः काव्यकष्टेऽभिनिविष्टोऽस्मि।

वाल्मीकिः—कियान्वर्तते नवेतिहासः।

व्यासः—संपन्नः। किं तूपाध्यायपादैः स्वयंवराय पाण्डवप्रवेशं यावदाकर्णित एव।

वाल्मीकिः—तदेहि। प्रास्तां सायंतनीं संध्यामुपासहे। ततः श्रावयि(श्रो)ष्यामि। संप्रति हि

अयमहिमरुचिर्मजन्प्रतीचीं कुपितवलीमुखतुण्डताम्रबिम्बः।
जलनिधिमकरैरुदीक्ष्यते द्राग्नवरुधिरारुणमांसपिण्डलोभात् ॥ २१ ॥

अपि च।

निर्यद्वासरजीवपिण्डकरणिं कुर्वन्कवोष्णैः करैर्माञ्जिष्ठं रविबिम्बमम्बरतलादस्ताचलं चुम्बति।
किं च स्तोकतमःकलापकलनाश्यामायमानं मनाग्धूमश्यामपुराणचित्ररचनारूपं जगज्जायते ॥ २२ ॥

(इति परिक्रम्य निष्क्रान्तौ।)

विष्कम्भकः।

(ततः प्रविशति ब्राह्मणवेषो युधिष्ठिरो भीमसेनादयश्च)

सहदेवः—इत इतः।

(सर्वे परिक्रामन्ति।)

युधिष्ठिरः—वत्स सोदर वृकोदर, परपुरंजय धनंजय, मण्डितपाण्डवकुल नकुल, द्विषद्दुःसह सहदेव, इह हि महाराजसमाजे न जाने कमवलम्बिष्यते राधावेधकीर्तिवैजयन्ती।

भीमः—(विहस्य।)

आर्यो वेत्ति निजां न विक्रमकलां त्वं विश्वरक्षामणिः
किं ब्रूमोऽस्य किरीटिनो न घटते द्रोणेन यस्योपमा।
माद्रीनन्दनयोर्नरेन्द्र विनयच्छन्नं हि वीरव्रतं
न भ्राता स तवास्ति यस्य पुरतो राधां परो विध्यति॥ २३॥

अर्जुनः—

दुर्नमं यदि मुरारिकार्मुकं दुर्भिदं यदि शरव्यमुच्छ्रितम्।
दुर्जया यदि च राजमण्डली तत्प्रभो द्रुपदजा न दुर्लभा॥ २४॥

नकुलः—निखिलनरेन्द्रवृन्दाधिष्ठितान्मञ्चसंचयानपास्य मुनिप्रायविप्रजनपरिगृहीतं मञ्चमारोहामो वयमपि विप्रवेषधारिण एव।

(सर्वे समारुह्य यथोचितमुपविशन्ति।)

(नेपथ्ये।)

इदो इदो कुमारधिट्ठज्जुण्णो भट्टिआरिआ अ।

युधिष्ठिरः—प्राप्तैवैषा स्वयंवरयित्री।

(ततः प्रविशति सधृष्टद्युम्ना द्रौपदी बन्दी सखी च।)

(परिक्रामितकेन)

धृष्टद्युम्नः—(एकतोऽवलोक्य।) कथं तातद्रुपदमनुग्रहीतुं महर्षयोऽपि स्वयंवरयात्रामञ्चमध्यासते। तदेतानभ्यर्हयामि। (सप्रश्रयमञ्जलिं बद्ध्वा।)

स्वस्त्यापस्तम्ब तुभ्यं त्वमसि ननु मुने कस्य नो माननीय-
स्त्वां वन्दे याज्ञवल्क्य द्विजसदसि कवे त्वां स्तुवे भारतस्य।

---

१. राधा धन्विनां लक्ष्यविशेषः. २. 'इत इतः कुमारधृष्टद्युम्नो भर्तृदारिका च' इति छाया.

विश्वामित्रः पवित्रं जगति विजयते काममत्रे नमस्ते
विश्वप्रष्ठे वसिष्ठे कृतनतिरपरान्स्तौमि हर्षान्महर्षीन् ॥ २५ ॥

(द्रौपदी प्रणमति ।)

धृष्टद्युम्नः—(अन्यतोऽवलोक्य ।)

लक्ष्मीसंवननैर्भुजैर्नृपतयः स्वस्त्यस्तु वः स्वागतं
नन्वेते गृहमेधिनां धुरि वयं यद्यूयमभ्यागताः ।
दृष्टः केन भवादृशां पुनरियान्पूज्यः समाजो जग-
त्युत्कण्ठा भवतां च संप्रति पुरः सेयं स्थिता द्रौपदी ॥ २६ ॥

सखी—ईदो इदो भट्टिदारिआ । जम्याहिवाहिणो, वासमाविसेदुम्[1] ।

युधिष्ठिरः—(सस्पृहमवलोक्य स्वगतम् ।) हंहो लोचनचकोरौ, युवामप्यातृप्तेः पिबतं द्रौपदीवदनेन्दुचन्द्रिकाम् ।

कण्ठे मौक्तिकदाम गण्डतलयोः कार्पूरमच्छं रजः
सान्द्रं चन्दनमङ्गके विचकिलस्रक्शेखरं मूर्धनि ।
तन्वी गाढमियं चकास्ति तनुनी चीनांशुके बिभ्रती
शीतांशोरधिदेवतेव गलिता व्योम्नि[2] द्रुतं गच्छतः ॥ २७ ॥

भीमः—(द्रौपदीसंभाषणमनुसंधाय । स्वगतम् ।)

श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः
पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्याम् ।
धत्ते वक्षः कुचसचिवतामद्वितीयं तु वक्त्रं
त्वद्गात्राणां गुणविनिमयः कल्पितो यौवनेन ॥ २८ ॥

अर्जुनः—(स्वगतम् ।) हृदय, कारय चक्षुषी पारणम् । पुरतो द्रौपदी । अस्याः खलु वयो विशेषोचितमधुना संभाव्यते

शारीद्यूतकलाकुतूहलि मनश्छेकोक्तिशिक्षारति-
र्नित्यं दर्पणपाणिना सहचरीवर्गेण चाचार्यकम् ।
प्रौढस्त्रीचरितानुवृत्तिषु रसो बाल्येऽपि लज्जा मना-
क्स्तोकारोहिणि यौवने मृगदृशां कोऽप्येष रम्यः क्रमः ॥ २९ ॥

---

१. 'इत इतो भर्तृदारिका । शिबिकावाहिनः, वासमाविशन्तु ।' (?) इति च्छाया.
२. 'व्योमारोहतः' इति पाठान्तरम्.

नकुलः—(स्वगतम्।) नेत्रे, यथाशक्ति विस्तारं भजेथाम्।

सितपरिचयावृत्तिर्वाचामपाङ्गतरङ्गितं
नयनरचितं पादन्यासो नितम्बभरालसः।
अहह सुतनोर्लीलासूत्रैः कृतं पदमङ्गके
वहतु मदनः शोभामात्रं धनुर्ननु संप्रति॥ ३०॥

सहदेवः—(स्वगतम्।) क्षणं चक्षुषी, निमेषदोषमपाकुरुतम्। इदमग्रे हृदयलेख्यममानुष्यं लावण्यम्।

तरङ्गय दृशौ मनाक्स्थगय दिङ्मुखान्युत्पलैः
करौ वलय जायतां सरसिजाकरो जङ्गमः।
विहस्य पुनरुक्ततां सुतनु लम्भयैकावली-
मुदञ्चय मुखं भवत्वयमकाण्डचन्द्रोदयः॥ ३१॥

बन्दी—(तारस्वरमास्थाय।)

सकलभुवनरक्षास्वस्ततन्द्रा नरेन्द्राः
शृणुत गिरमुदारामादराच्छ्रावयामि।
इह हि सदसि राधां यः शरव्यीकरोति
स्मरविजयपताका द्रौपदी तत्कलत्रम्॥ ३२॥

सखी—कथं विभ्रमताण्डवितभ्रूमञ्जरीभ्रमरपङ्क्तिलाञ्छितेन नयनोत्पलखण्डेन घूर्णमानं पिबदिव द्रौपदीवदनलावण्यामृतमितोऽभिमुखं वर्तते नरेन्द्रचक्रम्।

बन्दी—अहह कुसुमायुधस्याप्रतिहतं भगवतः शासनम्। यतः।

न्यस्तं ताण्डवितभ्रु चक्षुरमुना कण्ठो लुठत्पञ्चमः
संवृत्तोऽस्य करोत्ययं च तरलं हारं करान्दोलनैः।
मिथ्यासौ स्मयते स्थितो भणितिभिः किं चैष वैपञ्चिको
यत्सत्यं मदिरां विनैव मदनो यूनां मनोन्मादभूः॥ ३३॥

कथमहंपूर्विकया सर्वे एव धनुरारोपयितुं संरभन्ते।

---

१. इतः प्रभृत्यादर्शपुस्तके प्राकृतं त्यक्त्वा केवलं छायैव लिखितास्ति.

धृष्टद्युम्नः—हंहो कंदर्पचण्ड, निवार्यतामियमहमहमिका महीपाल-
नाम् ।

बन्दी—(किंचिदुच्चैः ।)

सर्वे कार्मुककर्मठाः क्षितिभुजः सर्वेऽपि शृङ्गारिणः
सर्वे मानमदोद्धताः शृणुत मे वन्ध्यं वचो बन्दिनः ।
दुर्धर्षे धनुरच्युतस्य पणितं तत्राध्यवस्यत्यसौ
यस्य स्थाम महर्द्धि तद्धिततमं व्रीडा यशःखण्डिनी ॥ ३४ ॥

(सर्वे परिक्रामितकेन ।)

बन्दी—(द्रौपदीं प्रति ।)

शंभोर्मूर्ध्नि गतागतानि कुरुते या चन्द्रलेखाङ्किते
तस्याः शांतनवोऽयमुज्ज्वलयशाः स्वर्गापगायाः सुतः ।
वन्दित्वैतमुदग्रभार्गवशरश्रेणीव्रणालंकृतं
भीष्मं सुभ्रु ततः स्वयंवरनृपान्प्रत्येकमालोकय ॥ ३५ ॥

सखी—द्रुपदनन्दिनि, गङ्गातनयः शान्तनव एषः । तद्गुरुत्वेन प्र-
णमतु ।

द्रौपदी—यः किल कुमारब्रह्मचारी । नमो नमः पाण्डवकौरवपिता-
महाय ।

(सर्वे परिक्रामितकेन ।)

बन्दी—(स्वगतम् ।) अयं भगवतो भीष्मादनूनगरिमा द्रोणाचार्यः ।
(प्रकाशं द्रौपदीं प्रति ।)

सदाशिवप्रशिष्योऽयमवधिः सर्वधन्विनाम् ।
आकर्णपलितः सुभ्रु द्रोणाचार्यः प्रणम्यताम् ॥ ३६ ॥

द्रौपदी—यः पाण्डवकौरवाणां धनुर्वेदविद्यागुरुः ।

बन्दी—निजदोःस्तम्भसंभावनागर्वखर्वितविवेकान्नृपतीनवलोक्य कि-
माह भारद्वाजः—

शिष्योऽसि भार्गवमुनेः कुरुपाण्डवानां
कोदण्डकर्मणि गुरुस्तदिदं ब्रवीमि ।

हे भूभुजो जयवपूंषि धनूंषि चक्र
मुक्त्वार्जुनं तु भुवि विध्यति कोऽत्र राधाम् ॥ ३७ ॥

द्रौपदी—नमो नमस्ते द्रोणाय कलशोद्भवाय।

(सर्वे परिक्रामितकेन।)

बन्दी—

दूरोदञ्चिमरीचिरत्नरचनाचित्रं तनुत्रं तनो-
रुत्कृत्य त्रिदशेश्वराय ददतो यस्य स्मितं चक्षुषा।
पाञ्चालीवदनेन्दुसुन्दरतया तेनैव पर्यश्रुणा
सोऽयं पश्यति दुर्धरं धनुरिदं राधां च राधासुतः ॥ ३८ ॥

(विचिन्त्य।) अहो महाप्रभावं भार्गवं धनुः। यदमुना मम चक्षुर्ज्ञानमुन्मीलितम्। येनास्य प्रभावं [च] भावं च भूपतीनां प्रत्यक्षमिव पश्यामि।

सखी—सखि, दानकीर्तिसंतर्पितभुवनकर्णः कर्ण एषः।

द्रौपदी—यो दुर्योधनप्रसादलब्धचम्पाधिपत्यः।

बन्दी—(विहस्य स्वगतम्।) अहो महात्मनामपि कैतवानुगृहीता वृत्तयः। यदेषः

दुर्नमं दहनसंभवं धनुः संशये न च सतां प्रवृत्तयः।
अङ्गराज इति चिन्तयन्निमां भाषते व्रज पुरः कुरूद्वहः ॥ ३९ ॥

(सर्वे परिक्रामितकेन।)

स एव—(प्रकाशम्।)

यौवराज्याभिषेकार्हो वीरो दुर्योधनानुजः।
दुःशासनो महावेष एष मञ्चं विमुञ्चति ॥ ४० ॥

सखी—यो दुःशलप्रभृतीनामेकोनशतस्य ज्येष्ठः, कनिष्ठो दुर्योधननरेन्द्रस्य।

धृष्टद्युम्नः—(स्वगतम्।) यथार्थनामा दुःशासन एवायम्।

चापं प्रति त्रिचतुराणि पदानि दत्त्वा
कृष्णाहठग्रहनिमित्तविषण्णचेताः।
दुःशासनो नृपतिचक्रविमुक्ततार-
हुंकारलज्जितमनाः शनकैः प्रयाति ॥ ४१ ॥

द्रौपदी—अपि नाम चण्डचरित एषः ।

बन्दी—(निरूप्य ।) नमो नमो विष्णुकोदण्डपणबन्धाय । (स्वगतम् ।)

द्रौपदीं परिणयन्तमर्जुनं विद्धराधमवलोक्य मायया ।
दोर्बलं विफलमात्मनो विदन्व्रीडयैष विनतो निवर्तते ॥ ४२ ॥

(परिक्रामितकेन ।)

बन्दी—

गान्धाराधिपतेः पुत्रः सुबलस्य बलीयसः ।
मातुलः कुरुराजस्य राजते नृपतिर्गुणैः ॥ ४३ ॥

द्रौपदी—यो द्यूतकैतवविचक्षणः श्रूयते ।

सखी—आम् । एतस्य किल हृदयचिन्तिता निवर्तन्ते भीमसेनस्य पुनः रक्षिता । (?)

बन्दी—

यात्राकृतोऽस्य चतुरङ्गचमूसमुत्थे
पांसूत्करे वियति सर्पति वीतरन्ध्रे ।
दिङ्नागनागपतिकेशवकच्छपाना-
मूर्ध्वं क्षणाद्भवति भूवलयस्य भारः ॥ ४४ ॥

(स्वगतम् ।)

धारितं द्रुपदजास्वयंवरे कार्मुकं शकुनिना करेण यत् ।
तस्य सर्वजनहासहेतवे कंधरां समधिरुह्य तत्स्थितम् ॥ ४५ ॥

(पुनरवलोक्य विहस्य च ।) कथं विमुक्तराधावेधाभिमानस्य स्वयंवरवदुत्तीर्णं स्कन्धाद्धनुः ।

(सर्वे परिक्रामितकेन ।)

बन्दी—

सिन्धुयन्त्रितयात्रोऽयं सिन्धुराजो जयद्रथः ।
सिन्धुपारोत्तमहयः सिन्धुरप्रतिमो बले ॥ ४६ ॥

अपि च ।

अस्याहवे दलितदाडिमबीजलौल्या-
न्मुक्ताफलेषु करिणां रुधिरारुणेषु ।

व्योम्नः शुकान्निपततस्तरसा निरीक्ष्य
नाकस्त्रियो बहु हसन्ति सहस्रताक्षम् ॥ ४७ ॥

द्रौपदी—यो दुर्योधनभगिनीपतिः।

धृष्टद्युम्नः—कथं धनुरारोपणपणं प्रत्ययमुदास्ते।

बन्दी—

दुःशलागुणगणेन रञ्जितो लज्जितश्च कुरुराजसंनिधौ।
कौतुकागमनमात्मनो वदन्नासनाच्चलति नो जयद्रथः ॥ ४८ ॥

(परिक्रामितकेन।)

बन्दी—

दुर्योधनो नृपकिरीटविटङ्करत्न-
रश्मिच्छटाच्छुरितपादयुगाङ्गुलीकः।
हेलाचलच्चमरनर्तितकर्णपूरः
शूरः शरासनविदां प्रथमोऽयमास्ते ॥ ४९ ॥

अस्य च

पादौ वाससि सान्द्रकुङ्कुमरसन्यासप्रसक्ताकृति-
र्यातुर्दिग्विजये न यैः प्रणयितां नीतः प्रणामाञ्जलेः।
ते प्रत्यग्रकपालपात्ररुचिभिस्ताराास्थिहारार्थिभिः
कङ्कालव्रतमीप्सुभिश्च मुदितैः कापालिकैर्वीक्षिताः ॥ ५० ॥

द्रौपदी—यः खण्डपरशुचूडामणेः कुलालंकरणम्।

सखी—आं सखि, स एवैषः।

द्रौपदी—अस्तीदम्। किं पुनः समुद्दीपितजतुभवनत्वेन विषाशनदातृत्वेन च च्छलप्रहारी एषः।

बन्दी—किमाह महाराजदुर्योधनः।

निर्दिशन्तु निजबाहुविक्रमं शार्ङ्गनाम्नि धनुषीह पार्थिवाः।
साभिमानहृदयस्तु मादृशः कः पणेन परिणेतुमिच्छति ॥ [1]५१ ॥

---

१. धन्द्रस.

(विचिन्त्य स्वगतम् ।) कथमभिमानाङ्गीकरणेन परिहार एषः । (परिक्रम्यैव प्रकाशम् ।) स एष भगवतो वासुदेवस्यापि वन्दनीयो बलभद्रः ।

किं किं किं चु चु चुम्बनैर्म म मुधा वक्त्राम्बुजस्याग्रतो
　दे दे देहि पि पि प्रिये सु सु सुरां पात्रे त्रि रे रेवति ।
मा मा मा वि विलम्बनं कु कु कुरु प्रेम्णा हली याचते
　यस्येत्थं मदघूर्णितस्य तरसा वाचः स्खलन्त्याकुलाः ॥ ५२ ॥

अपि च ।

नीलाम्बरं नलिनदाम च यस्य भूषा
　यत्प्रीतिकारि मधुरं मधु रेवती च ।
लीलार्धदृष्टधनुरत्र हली सहेलं
　शौरेः स एष खलु खेलति खेलगामी ॥ ५३ ॥

द्रौपदी—यः किलैरावणवारण इव सदा मदस्वच्छन्दः ।

बन्दी—किमाह कामपालः—

रेवतीं त्रिभुवनैकसुन्दरीं न प्रकोपयति रोहिणीसुतः ।
तेन नैष विदधाति कौतुकी दृक्त्रिभागमपि कृष्णकार्मुके ॥ ५४ ॥

(पुनः ।)

बन्दी—

यः पीयूषभुजां पुरः प्रहरतां दम्भोलिपाणिं रणे
　निर्जित्योर्जितशार्ङ्गनिर्गतशरश्रेणीभिरुद्दामभिः ।
शच्या वाञ्छितमौलिबन्धरचनैः पुष्पैः सदा सुन्दरां-
　श्चक्रे नन्दनपारिजातकतरून्विश्वंभरासाक्षिणः ॥ ५५ ॥

वृषतुरगकरीन्द्रस्यन्दनाद्याकृतीनां
　किमपरमसुराणां मन्थिता सोऽयमास्ते ।
कृतसुरपरितोषः षोडशस्त्रीसहस्र-
　प्रणिहितपरिरम्भस्यास्पदं पद्मनाभः ॥ ५६ ॥

द्रौपदी—यस्य किल कलकण्ठीमञ्जुलजल्पिनी रुक्मिणी प्रथमकलत्रम् । यस्य काञ्चनाभा सत्यभामा संवननं हृदयस्य ।

बन्दी—किमाह देवो वासुदेवः ।

यस्मिन्मदस्य मदनस्य च भूर्ममार्यो
यस्मिन्नमी च यदुवंशभुवः कुमाराः ।
नन्वत्र सोऽहममुना कमलावतार-
स्त्रीचक्रकेलिचतुरश्चरितेन लज्जे ॥ ५७ ॥

(परिक्रामितकेन ।)

बन्दी—

वल्गच्चाणूरचूर्णीकरणसहभुवः पूतनाफूत्कृतानां
कर्तारः कंसवंशप्रशमपरशवः केशिनः क्लेशकाराः ।
यस्यासन्दानदर्पप्रबलकुवलयापीडपीडाप्रगल्माः
क्रीडाडिम्भस्य लीलोद्धृतधरणिधराः केलयः कालियारेः ॥ ५८ ॥

तस्यैष शम्बरमहासुरसुन्दरीणां
सिन्दूरमण्डनहरेण पराक्रमेण ।
शश्वत्प्रकामकमनीयजनोपमानं
प्रत्यक्षपञ्चविशिखस्तनयः पुरस्तात् ॥ ५९ ॥

द्रौपदी—यः किल यादवकुमाराणां मध्ये निरुपमरूपरेखाजयपताकां निर्विलम्बमवलम्बते ।

बन्दी—धृष्टद्युम्न आर्य,

उद्यतः क्रतुकृशानुजन्मनः कर्तुमेष धनुषोऽधिरोहणम् ।
शार्ङ्गिणा भगवता ससंभ्रमं भ्रूविटङ्कघटनेन वार्यते ॥ ६० ॥

(परिक्रामितकेन ।)

बन्दी—कथं सात्यकिः,

धनुर्विद्यारहस्येषु शिष्योऽयं सव्यसाचिनः ।
प्रद्युम्नस्य सहाध्यायी सात्यकिः सत्यसंगरः ॥ ६१ ॥

अपि च ।

यः सत्यस्य निधिः श्रियां च सरणिः साम्नां च धाम्नां चयो
यो दाता च दयालुरेव च पदं कीर्तेश्च नीतेश्च यः ।

तस्यैतस्य स एष दूषणकणः कारुण्यपुण्यात्मनः
पात्रापात्रविवेचनं न यदभूत्सर्वस्वदानेष्वपि ॥ ६२ ॥

द्रौपदी—यो यादवकुमारोऽपि भूत्वा अनास्वादितकादम्बरीरसः स एतस्य गुणो दोषो वा क्रियताम् ।

बन्दी—

यागकुण्डशिखिगर्भसंभवं वन्द्यते न तु करेण लङ्घ्यते ।
इत्युदीर्य चतुरोक्ति सात्यकिः पूजया परिहरत्ययं धनुः ॥ ६३ ॥

(परिक्रामितकेन ।)

शिशुपालमहीपालो मेकलानां कुलोद्भवः ।
अयं सजयनिर्घोषो दमघोषसुतः परः ॥ ६४ ॥

पाणिप्रस्थैर्बकुलसुमनःसौरभं यो मिमीते
दंपत्योर्यः सुरतसमरे सौख्यसंख्यां करोति ।
यश्च ज्योत्स्नां चुलकपटलैः काममाचामतीन्दोः
शक्तः स्तोतुं यदि स निखिलान्यस्य कीर्त्यद्भुतानि ॥ ६५ ॥

द्रौपदी—यो निर्जितसुरासुरः ।

बन्दी—

दक्षिणं करमुपैति वामतो वाममञ्चति च दक्षिणादिति ।
दूरतोऽस्य नृपतेर्गुणार्पणं धारणेऽपि धनुषो विडम्बना ॥ ६६ ॥

(परिक्रामितकेन ।)

सत्यसंधो जरासंधः क्रान्तदिग्वलयो बलैः ।
अत्रैष राजते राजा मागधो मगधस्तुतः ॥ ६७ ॥

अस्यासमं समरकर्म दिदृक्षमाणै-
र्दोषद्वयं फणिभिरापि चमूरजस्तः ।
यत्कूणितेक्षणतया न कबन्धनृत्तं
दृष्टं श्रुतो न च महाभटसिंहनादः ॥ ६८ ॥

द्रौपदी—यो जननीजनितदेहखण्डयुगलो जरया राक्षस्या संधित इति जरासंधो भूपतिः ।

बन्दी—

अस्य वैष्णवमिदं महाधनुः स्वप्रभावविभवेन भूपतेः।
अम्बरे भुवि दिशां च संचये दर्शयत्यतनुकार्मुकावलीः ॥ ६९ ॥

(परिक्रामितकेन।)

बन्दी—कथमेते राजानो युगपदुत्थिताश्चापमारोपयितुं विडम्बिताश्च। तथा हि।

जातं कीकसभङ्गतः शकपतेर्दोर्दण्डयोः खण्डनं
निष्ठ्यूता रमठेश्वरस्य वदनात्कीलालकल्लोलिनी।
जानुभ्यां जगतीं गतश्च तरसा पाण्ड्यः प्रचण्डोऽप्ययं
कोदण्डेन न खण्डिताः क्षितिभुजो दामोदरीयेण के ॥ ७० ॥

बन्दी—(सविषादम्।)

हा मन्त्रं शकुनेः कुलक्षयकरं दुर्योधनं हा नृपं
हा भीष्मं च पितामहं गुरुमपि द्रोणं सपुत्रं च हा।
दग्धा यज्जतुधाम्नि पाण्डुतनया जीवेत्स चेदर्जुनो
राधायन्त्रमविद्धमत्र न भवेत्कन्या च न द्रौपदी ॥ ७१ ॥

धृष्टद्युम्नः—

वैकुण्ठकार्मुकहठाक्रमणैककुण्ठे
दोर्दण्डखण्डनविखण्डितराजचक्रे।
द्राग्द्रौपदी नमितकण्ठविलोठिहार-
विश्लिष्टयष्टिगणनागुणनां करोति ॥ ७२ ॥

सखी—किं पुनरेष भरितभुवनः कोलाहलो विपुलः।

बन्दी—(अवलोक्य सहर्षम्।)

धृष्टद्युम्ने विषण्णे हसति मुरजिति द्रौपदीचित्तनिन्द्ये
कोदण्डप्रौढिगाढग्लपितगुरुबले चात्र राज्ञां समाजे।
प्रेङ्खत्कृष्णाजिनानां करकरकजुषां वल्कलव्याकुलानां
विप्राणां कोऽपि मध्यादवतरति युवा कार्मुके दत्तदृष्टिः ॥ ७३ ॥

---

१. करकः कमण्डलुः.

अपि च ।

व्रीडानतेषु वदनेषु च भूपतीनां
　संचारयन्विकचपङ्कजचारु चक्षुः ।
अभ्येति मत्तगजखेलगतिः स एष
　साभ्यर्थनं मुनिजनेन निषिध्यमानः ॥ ७४ ॥

अर्जुनः—(कतिचित्पदानि दत्त्वा । चतुर्दिशमवलोक्य ।)

एतत्कृष्णस्य शार्ङ्गं ननु धनुरतनुप्राणदोर्दण्डचण्डै-
　र्दूराद्भूपप्रकाण्डैः सपदि परिहृतं शिञ्जिनीसज्जनेषु ।
मध्ये राज्ञां प्रतिज्ञा मम पुनरियती मद्भुजायप्रयोगे
　प्रत्येकं पर्वमुद्रा त्रुटति तडिति वा जायते कर्मठं वा ॥ ७५ ॥

(सरभसं परिक्रम्य धनुरारोपणं नाटयन् ।)

मद्बाहुयन्त्रयुगयन्त्रितमाततज्यं
　न स्याद्धनुः कथमिदं हि रथाङ्गपाणेः ।
बुभ्राटनिर्यदि न याति च भूमिपृष्ठ-
　मा शेषमा च कमठाधिपमभ्युपेयात् ॥ ७६ ॥

भीमः—वत्स नकुल, भिदुरा भूमिरिति मा कदाचन कदर्थितकोदण्ड-कोटिः स्यात्किरीटी । तत्तस्याधस्ताद्धस्तं दार्ढ्याय निदधे । (इति तथा करोति ।)

नकुलः—

धत्से जर्जरतां न मेदिनि मुधा मा शेष शङ्कां कृथा-
　स्तुभ्यं कूर्मपते नमस्त्यज भयं दिक्कुञ्जराः स्वस्ति वः ।
यज्जिष्णुर्भुजयोर्बलेन नयति ज्यां हेलयैवाटनीं
　धत्ते पाणितलं तलेऽस्य धनुषो वामं हिडिम्बापतिः ॥ ७७ ॥

(अर्जुन आरोपयति ।)

सखी—भगवति मिथुनसंघटनैकदेवते, कुण्ठितनिःशेषनरेन्द्रचक्रमेक-विप्रवीरसमुद्यमशेषं वर्तते स्वयंवरडम्बरम् ।

(अर्जुनो बाणमोक्षं नाटयति ।)

बन्दी—

आकर्णाञ्चितचापमण्डलमुचा बाणेन यन्त्रोदर-
च्छिद्रोत्सङ्गविनिर्गतेन तरसा विद्धा च राधामुना ।

(द्रौपदीमवलोक्य ।)

तुभ्यं मोहनशोषणप्रभृतयः प्रक्षेपकुण्ठक्रमाः
कामेन द्रुपदात्मजाहृदि हठान्न्यस्ताश्च पञ्चेषवः ॥ ७८ ॥

सखी—आश्चर्यमाश्चर्यम् । असलिलात्कुवलयोत्पत्तिरकुसुमं कुसुमकोदण्डकाण्डममन्त्रतन्त्रं मनोमोहनमिन्द्रजालमस्या दृष्टिर्विप्रवीरवदने निष्पतन्ती न विरमति ।

अर्जुनः—कथं राधावेधानन्तरमियमस्मासु स्निह्यति । यतः ।

जैत्रं तन्त्रं कुसुमधनुषः प्रेमसर्वस्वदूताः
सत्यंकाराः प्रणयविततेस्तुष्टये पुष्टियोगाः ।
विन्यस्यन्तः श्रवसि सुतनोर्मेचकाम्भोजभूषा-
मुत्कण्ठन्ते मयि निपतितुं नर्तिताक्षाः कटाक्षाः ॥ ७९ ॥

बन्दी—हा हा धिकष्टम् ।

ध्रुवमिदमुपदिष्टं कैश्चिदाचार्यपादै-
र्यदुत जनकशोकस्यैकहेतुः कुमारी ।
अकलितकुलशीलोऽप्येष यत्कोऽपि धन्वी
द्रुपददुहितुरस्या वाञ्छति स्वामिभावम् ॥ ८० ॥

अर्जुनः—हंहो बन्दिवृन्दारक, किमत्र कुलान्वेषणेन । किं वा मे शीलपर्यालोचनया । धनुरारोपणपणपरिणेया द्रौपदी ।

(नेपथ्ये ।)

हंहो ब्राह्मण, त्वामेवं समुदिता नृपतयो भाषन्ते—

सायकश्च त्वया मुक्तो यन्त्रं वा तेन चाहतम् ।
तन्मा वृथा विकत्थस्व न राधां विद्धवानसि ॥ ८१ ॥

(पुनः साक्षेपम् ।)

रे रे ब्राह्मण मुञ्च विप्लवममुं श्रुत्यर्थवीथीं स्मर
क्षत्रस्यात्र ननु स्वयंवरविधावेकाधिकारः स्थितः ।
तच्चेन्नाद्रियसे स्मरार्द्रहृदयो दण्ड्यस्त्वमुर्वीभुजां
तत्संकर्षणकार्मुके समुदिता नैते क्षमन्ते नृपाः ॥ ८२ ॥

**अर्जुनः**—(तान्प्रति ।)

कस्य द्रोणो धनुषि न गुरुः स्वस्ति देवव्रताय[1]
त्यक्ताभ्यासः कुरुपतिरयं श्रीसमुत्थैर्विलासैः ।
भोः कर्णाद्याः शृणुत तदिमां ब्राह्मणस्यास्य वाणीं
राधायन्त्रं रचयत पुनर्विद्धमप्यस्त्वविद्धम् ॥ ८३ ॥

**सखी**—सखि, इतस्तरलितहारहारिवक्षः उन्मुक्तचक्रमुच्चण्डस्थितचित्रदण्डमाकर्णकृष्टकोदण्डमण्डलमधिष्ठितभिन्दिपालमाहितसंघट्टपट्टिशमसंख्यशङ्कुसंभूषणमलंकृतकनककवचं समन्ततः समुच्चरति वृन्दं नरेन्द्राणाम् ।

**बन्दी**—

संघट्टोत्पिष्टचूडाच्युतमणिकणिकाकर्बुरैर्बाहुदण्डै-
स्तूणोत्कीर्णास्त्रदण्डाः क्षितिपतय इमे सर्वतः संरभन्ते ।
अग्रे कृत्वा विलोलां द्रुपददुहितरं विद्धराधाशरव्यं
बाणं कोदण्डदण्डे विदधदयमितो वर्तते विप्रवीरः ॥ ८४ ॥

(नेपथ्ये ।)

देवस्य द्युमणेः कुले नृपतयो ये चात्र चूडामणेः
श्रीकण्ठस्य निवेदयामि तदिदं तेषां द्वयेषामपि ।
विप्रश्रीवरवान्सहायरहितः कोऽप्येष वः पश्यतां
राधावेधकरो हठेन हरते कीर्त्या समं द्रौपदीम् ॥ ८५ ॥

**भीमः**—वत्स धनंजय, त्वं कराकलितद्रौपदीक एव मामनुवर्तस्व । अहं राजचक्रस्य पुरतो भवामि । (तथा करोति ।)

---

1. भीष्माय.

नकुलः—आर्य, इमं तालतरुमायुधीकुरु।

(भीमस्तथा करोति।)

बन्दी—

उत्पाटितमहातालः कुसचण्डगदाधरः।
विप्रवीरो द्वितीयोऽपि पार्थिवानां पुरः स्थितः॥ ८६॥

अर्जुनः—(राजकमवलोक्य।)

अयमहमिह विप्रः प्रोतराधारहस्य-
स्त्रिभुवनजयमुद्रा द्रौपदी चेयमत्र।
कलयथ यदि दोष्णश्चापदण्डप्रचण्डां-
स्त्यजत रथगजस्थास्तत्पुरस्योपकण्ठम्॥ ८७॥

बन्दी—(विचिन्त्य।)

वीर्यं वचसि विप्राणां क्षत्रियाणां भुजद्वये।
इदमत्यन्तमाश्चर्यं भुजवीर्या हि यद्द्विजाः॥ ८८॥

(अर्जुनस्तदेव पठति।)

(नेपथ्ये।)

साधु ब्राह्मण, साधु। क्षत्रमार्गमनुवर्तसे।

भीमः—यद्येवम्

प्रसर्पतु रणाङ्गणे रुधिरकेलिकल्लोलिनी
भवन्तु फलिता इव द्विरदमुण्डखण्डैर्दिशः।
नृमांसकवलान्तरेष्वपि च साग्निलेखैर्मुखैः
कृतान्तजयमङ्गलं विदधतु ध्वनिं फेरवाः॥ ८९॥

(इति निष्क्रान्ताः सर्वे।)

इति महाकविश्रीराजशेखरकृते प्रचण्डपाण्डवापरनाम्नि बालभारते नाटके
राधावेधो नाम प्रथमोऽङ्कः।

---

द्वितीयोऽङ्कः ।

(ततः प्रविशति विदुरः [illegible] पुरुषश्च ।)

विदुरः—

आ देवाद्दिव्यपङ्केरुहसदनजुषोऽस्मिन्महाराजवंशे
विष्वक्सेनावताराद्विजयिनि जगतामत्र चित्रप्रसूतेः ।
हे विश्वे लोकपालास्त्वमपि वसुमति ब्रूहि वाचं पवित्रा-
मिन्दोरन्यस्य दृष्टो यदि किल कलयाप्यास्तृताङ्कः कलङ्कः ॥ १ ॥

तत्रैव गोत्रे संप्रति तु—

वाच्यं यत्र दुरुक्तयः कुचरितं नानाविधा वर्णिका
लोभः सान्द्रतमो रसः किमपरं भावश्च मोहो महान् ।
शैलूषैः कितवैरनेककपटश्रेणीमहानाटकं
द्यूतं यत्किल तत्र कौरवपतिः प्रस्तावनायां स्थितः ॥ २ ॥

पुरुषः—आर्य धर्मावतार विदुर, किं पुनरेवं भण्यते । यतो द्यूतमहत्तरा एवं मन्त्रयन्ति—

रणन्मणिनूपुरा रणरणद्धारच्छटाः
क्वणन्मणिकिङ्किणीमुखरमेखलामालिकाः ।
भवन्ति भवनाङ्गणेऽनघघनस्तन्यस्तेषां परं
प्रसन्नदिनस्वामिन इह जयन्ति द्यूतेन ये ॥ ३ ॥

विदुरः—तिमिंगिलगिलन्यायोऽयं शङ्कयति नात्र जीयते । (विचिन्त्य ।)

श्रीनिर्वासनडिण्डिमो घनरवः सद्म स्थितं छद्मनां
सत्योत्सारणघोषणा तत इतो लज्जा निवापाञ्जलिः ।
द्वारं दुर्यशसां पराभवपदं गोष्ठी गरिष्ठापदां
द्यूतं दुर्नयवारिधिर्निपततां कस्तत्र हस्तग्रहः ॥ ४ ॥

पुरुषः—आर्य धर्मावतार विदुर, किं पुनरिदं सखेदं भण्यते ।

विदुरः—चण्डातक, शृणु यन्मण्यते । (पुनस्तदेव पठति ।)

चण्डातकः—अभिन्नो भ्रातृषु, स्वच्छचित्तो मित्रेषु, स्निग्धो बन्धुषु,

---

१. प्राकृतच्छायारूपोऽयं श्लोकः अत एव छन्दोभङ्गः.

निसर्गरक्तः कलत्रेषु, विनयभङ्गुरो गुरुषु, प्रसादनिष्ठो भृत्येषु महाराजयुधिष्ठिरः । तत्किमिति तत्रैष कौरवेन्द्रस्य विशेषपरिस्पन्दः ।

विदुरः—किमुच्यते—

युधिष्ठिरो धर्ममयो महाद्रुमः स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखाः ।
माद्रीसुतौ पुष्पफले समृद्धे मूलं कृष्णो ब्रह्म च ब्राह्मणाश्च ॥ ५ ॥

(विचिन्त्य ।) कौरवपतिस्तस्य प्रत्युदाहरणम् ।

दुर्योधनो मन्युमयो महाद्रुमः स्कन्धः कर्णः शकुनिस्तस्य शाखाः ।
दुःशासनः पुष्पफले समृद्धे मूलं राजा धृतराष्ट्रो मनीषी ॥ ६ ॥

यदयमाहूय वारणावतात्प्रेमप्रणयाभ्यां नाम शकुनिकर्णकुरुपतिप्रेरितेन धृतराष्ट्रेण युधिष्ठिरोऽभिहितः—'यदुत वत्स युधिष्ठिर, दुर्योधनकारिते सदसि भ्रातृद्यूतं प्रवर्तयितव्यम्' इति ।

चण्डातकः—ततस्तेन किं प्रतिपन्नम् ।

विदुरः—यत्पाशसंयतो वन्यः करी प्रतिपद्यते । तथा चाभिहितं तेन—

राजसूयक्रतोर्यज्वा पाण्डुपुत्रो युधिष्ठिरः ।
आहूतो न निवर्तेय द्यूताय च रणाय च ॥ ७ ॥

पुरुषः—अत एवाहं शकुनिना प्रगुणीकृत्याक्षप्रसारं शारफलकं समर्प्य च संप्रेषितोऽस्मि सभामध्यम् । तदार्य, कथयस्व किं कारणं दुर्योधनस्य दुर्जयत्वे ।

विदुरः—श्रुतो मया कुड्यान्तरितेन शकुनिना सह मन्त्रयमाणो दुर्योधनः—

तत्रोत्सर्पिणि राजसूयसमये राज्ञः पृथाजन्मनो
द्वीपेशैर्विनयान्वितैरुपचितं चित्रैर्महाप्राभृतैः ।
प्रत्यक्षीकृतवान्यदस्मि विभवं कोषाधिकारे स्थित-
स्तेनाद्यापि निरौषधो मनसि मे दाहज्वरो वर्तते ॥ ८ ॥

१. अयं श्लोकोऽपिमध्येऽभौ महाभारतस्थौ.

अपि च गान्धाराधिपते मातुल,

मायामये मयसमाधितले महाम्बु
त्यक्त्वा ततो व्रजति मय्यनभिज्ञभावात् ।
यत्कृष्णया विहसितं सह फाल्गुनेन
तन्मे मनः कुसुमलावमिदं लुनाति ॥ ९ ॥

(नेपथ्ये ।)

देवश्चन्द्रकुलप्रतापतिलकः षाड्गुण्यवाचस्पति-
र्वीरो निर्मलकीर्तिनिर्जरगिरिर्भूखण्डविद्याधरः ।
कृत्स्नद्वीपजयैकलम्बितमहाश्वेतातपत्रोन्नतिः
पाण्डोः पाण्डुयशस्करो विजयते पृथ्वीं पृथानन्दनः ॥ १० ॥

चण्डातकः—युधिष्ठिरबन्दी पठति किंनरकण्ठ एषः ।

(पुनर्नेपथ्ये ।)

नाले शौर्यमहोत्पलस्य विपुले सेतौ समिद्वारिधेः
शश्वत्खड्गभुजंगचन्दनतरौ क्रीडोपधाने श्रियः ।
आलाने जयकुञ्जरस्य सुदृशां कंदर्पदर्पे चिरं
श्रीदुर्योधनदोष्णि विक्रमधने लीनं जगन्नन्दति ॥ ११ ॥

चण्डातकः—एष दुर्योधनमागधः कलकण्ठो नाम ।

विदुरः—संप्राप्तावेतौ युधिष्ठिरदुर्योधनौ सभाम् । एते च भीष्मद्रोणकृपहार्दिक्यकर्णसोमदत्ताश्वत्थामादयो भीमसेनः कौरवेश्वरभ्रातृशतं च प्रविशति । तदावामपि प्रविशावः ।

(इति निष्क्रान्तौ ।)

विष्कम्भकः ।

---

(ततः प्रविशति युधिष्ठिरो भीमसेनश्च, दुर्योधनः शकुनिश्च, तयोश्च ताम्बूलकरङ्कवाहिन्यौ सुनन्दा सुरेखे च ।)

युधिष्ठिरः—

विवर्तयाक्षाञ्शकुने शारक्रीडां प्रवर्तय ।
धृतराष्ट्रस्य पाण्डोश्च ममाज्ञामौलिमश्नुते ॥ १२ ॥

---

१. उदाहृतोऽयं श्लोकः क्षेमेन्द्रेणौचित्यविचारचर्चायाम्.

किं च ।

राजसूयक्रतोर्यज्वा पाण्डवोऽयं युधिष्ठिरः ।
आहूतो न निवर्तेय द्यूताय च रणाय च ॥ १३ ॥

शकुनिः—(दक्षिणं बाहुमुद्यम्य ।)

हंहो हस्त कृतास्त्र दानसलिलप्रक्षालित स्वस्ति ते
लोकेष्वक्षविचक्षणश्च शकुनिः स्वाङ्केऽपि भक्तस्त्वयि ।
वीरे माननिधौ पराक्रमधने तद्भागिनेये मम
श्रीः पार्थप्रथमादपास्य भवता कार्या हि दुर्योधने ॥ १४ ॥

दुर्योधनः—तदार्य, पणः क्रियताम् ।

युधिष्ठिरः—

हारोऽयं केरलस्त्रीविहसितशुचिभिः पङ्क्तिभिर्मौक्तिकानां
शुक्रेणैकाकृतीनां कृतसकलसभागर्भचन्द्रोदयश्रीः ।
आतृद्यूते पणो मे रजनिचरवतेर्जितो राजसूये
यस्यैतन्मध्यरत्नं छुरयति ककुभः कौङ्कुमीभिः प्रभाभिः ॥ १५ ॥

भीमः—भवतस्तु कः पणः ।

दुर्योधनः—

राजावलीक्रमायातो राजकोषः पणो मम ।
शकुन्तलाद्याभरणैर्यः पुनाति च पाति च ॥ १६ ॥

(उभौ क्रीडतः ।)

शकुनिः—जितं जितं महाराजदुर्योधनेन । हंहो युधिष्ठिर, हारितो हारः ।

(दुर्योधनः सुरेखायाः कण्ठे परिधत्ते ।)

सुनन्दा—(हसन्ती ।) हंहो महाराज दुर्योधन, युधिष्ठिरकण्ठनिवेशिनमीदृशं हारं समर्थास्मादृशजनयोग्यं यत्करोषि तत्र रोहिणीवल्लभकुलोचितमनुतिष्ठसि ।

भीमः—साधु सुनन्दे, साधु । उचितमभिहितम् ।

---

१. आकाशस्थग्रहविशेषेण. स च सर्वताराभ्यः कान्तिमान्स्थूलश्च.

**सुरेखा**—अयि उद्भ्रामरशीले, द्यूतजितेऽपि यन्त्रणा ।

**शकुनिः**—(स्वगतम् ।) प्रतिभावती सुरेखा । (युधिष्ठिरं प्रति प्रकाशम् ।) अपरः पणः क्रियताम् ।

**युधिष्ठिरः**—संपादिता तातधृतराष्ट्रस्याज्ञा तदास्ताम् ।

**शकुनिः**—(विहस्य ।) दुर्योधने क्रीडति कथं धर्मराजो विरमति । नन्वधुनैव प्रतिज्ञातम्—'आहूतो न निवर्तेय द्यूताय च रणाय च' ।

**युधिष्ठिरः**—(सुनन्दामालोक्य सस्मरणम् ।) यद्येवम्

कुर्वन्त्यो नयनैरपाङ्गतरलैर्दीर्घायुषं मन्मथं
तन्वन्त्यो हृदि रागिणां रतिमहावल्लीविलासाङ्कुरम् ।
न्यस्यन्त्यो मदिरामदस्य च हठात्कांचिन्मनोहारिता-
मङ्गैर्मुग्धमधूकपाण्डुभिरिमा वाराङ्गना मे पणः ॥ १७ ॥

**भीमः**—भवतस्तु कः पणः ।

**दुर्योधनः**—

सुधावीचीमुचां वाग्भिर्विभ्रमावल्गिकुण्डलः ।
ममापि वारनारीणां स्मरस्मेरो गणः पणः ॥ १८ ॥

(उभौ क्रीडतः ।)

**शकुनिः**—जितं जितं महाराजदुर्योधनेन ।

**दुर्योधनः**—सुरेखे, त्वमेतासां सुनन्दाप्रभृतीनामधिष्ठात्री भव ।

**सुरेखा**—यत्कुरुपतिराज्ञापयति । (प्रणमति ।)

**सुनन्दा**—धर्मनन्दनो यदि पुनर्जयत्यस्ति सुरेखाप्रभृतीनां तदहमप्यधिष्ठात्री आसिष्ये ।

**शकुनिः**—अपरः पणः क्रियताम् ।

**युधिष्ठिरः**—

निरर्गलविनिर्गलद्गुलगुलाकरालैर्गलै-
रमी तडिति ताडितोद्भ्रमरडिण्डिमोड्डामराः ।
मदाचमनचञ्चुरप्रचुरचञ्चरीकोच्चयाः
पणः परिणतिक्षणक्षततटान्तरा दन्तिनः ॥ १९ ॥

भीमः—भवतस्तु कः पणः।

(दुर्योधनस्तदेव पठति। उभौ क्रीडतः।)

शकुनिः—जिता दन्तिनः।

दुर्योधनः—(नेपथ्यं प्रति।) दुःशासन, द्यूतदन्तिनां प्रणेता त्वं भव।

(नेपथ्ये।)

यदादिशत्यार्यदुर्योधनः।

शकुनिः—अपरः पणः क्रियताम्।

युधिष्ठिरः—

झणज्झणितकिङ्किणीमुखरकंधरासंधिभि-
र्युतास्तरुणतित्तिरिच्छदमनोहरैर्वाजिभिः।
द्रुणाङ्कघनपट्टिशत्रिशिखखङ्गिनः स्तम्भिनो
रथाः प्रचलकाञ्चनध्वजमहापताकाः पणः॥ २०॥

(उभौ क्रीडतः।)

शकुनिः—हारिता रथाः।

दुर्योधनः—(नेपथ्यं प्रति।) सखे अङ्गराज, त्वं रथानां नेता भव।

(नेपथ्ये।)

यदादिशति कौरवेश्वरः।

शकुनिः—अपरः पणः क्रियताम्।

युधिष्ठिरः—

महीधरधरासु ये सनिनदं पतद्भिः खुरै-
र्लिखन्ति च पठन्ति च स्फुटतरं टकारानिव।
विरोचनहयावलीकुलभुवां स तेषामयं
पणः पवनरंहसां मम तुरंगमाणां गणः॥ २१॥

(उभौ क्रीडतः।)

शकुनिः—जितं जितं महाराजदुर्योधनेन।

दुर्योधनः—मातुल, त्वमेषां तुरंगमाणां भर्ता भव।

शकुनिः—यदाह महाराजः । (राजानमुद्दिश्य ।)

किं वाजिभिः किमु गजैः किमथो रथैर्वा
सापत्नकं न धृतये धरणी पणोऽस्तु ।
एकातपत्रमिदमद्य चिराय राज्यं
धर्मात्मजो भजतु वा धृतराष्ट्रजो वा ॥ २२ ॥

युधिष्ठिरः—यद्येवम्

ऐलः प्राक्स पुरूरवाः प्रभुरभूद्यस्योर्वशी वल्लभा
दुष्यन्तः स च योऽप्यसूत भरतं शाकुन्तलं शान्तये ।
श्रीमाञ्शंतनुरग्रिमः स च सतां गङ्गाकलत्रेण य-
स्तत्सिंहासनमम्बुराशिरशनां शासन्महीं मे पणः ॥ २३ ॥

भीमः—भवतस्तु कः पणः ।

(दुर्योधनस्तदेव पठति ।)

(नेपथ्ये ।)

राजन्युधिष्ठिर नराधिप कौरवेन्द्र
वंशे युवां भगवतो भवशेखरस्य ।
द्यूतं न युष्मदुचितं ननु चिन्त्यतां च
कैः क्षत्रियैर्वसुमती पणिता पुराणैः ॥ २४ ॥

युधिष्ठिरः—भोः सभासदः, कथं किल राजसूययज्वा प्रतिज्ञातमर्थं कदर्थयति ।

दुर्योधनः—हंहो सभ्याः, अक्षधर्मा अपि न निषिध्यन्ते ।

(उभौ क्रीडतः ।)

शकुनिः—जितं जितं महाराजदुर्योधनेन ।

दुर्योधनः—स्वयमहमस्य राज्यार्धस्याधिष्ठाता ।

शकुनिः—अपरः पणः क्रियताम् ।

युधिष्ठिरः—किं नामावशिष्टं यत्पणीक्रियते ।

शकुनिः—किं नामापहारितं शरीरे तिष्ठति । शरीरधना हि राजानः ।

युधिष्ठिरः—यद्येवम्

निर्यान्ति यस्य वदनाद्वितथा न वाचो
यो राजसूयविधिनिर्धुतपापपङ्कः।
सोढा न चानुजमहाविरहस्य योऽस्मि-
न्सोऽयं स्वयं तव पणः प्रथमः पृथासूः॥ २५॥

भीमः—(स्वगतम्।) कथमात्मापि पणीकृतः। अहो सत्यसंधता आर्येयुधिष्ठिरस्य। (प्रकाशम्।) भवतस्तु कः पणः।

दुर्योधनः—

हेलानमन्नृपकिरीटविटङ्ककोटि-
झंकारिरत्नचितकाञ्चनपादपीठः।
वैतालिकैः स्तुतसमस्तजयोत्सवश्रीः
सोऽयं स्वयं प्रतिपणस्तव कौरवेन्द्रः॥ २६॥

(उभौ क्रीडतः।)

शकुनिः—जितं जितं महाराजदुर्योधनेन।

युधिष्ठिरः—जितोऽस्मि। तन्नियोजय कृत्ये।

शकुनिः—पुनरपरः पणः क्रियताम्।

युधिष्ठिरः—कः पुनरपरः पणः।

शकुनिः—भ्रातरः।

युधिष्ठिरः—

यो मन्थानकरः क्रतौ निजकुलप्राकारबन्धश्च यो
दोर्भ्यां यः प्रसभं व्यधत्त च जरासंधस्य संधिच्छिदाम्।
सोऽयं हतहिडिम्बडिम्बविजयी वीरस्त्रिलोकाद्भुतं
भीमो भीमपराक्रमः पृथुगदाव्यग्राग्रपाणिः पणः॥ २७॥

भीमः—भवतस्तु कः पणः।

दुर्योधनः—

संकर्षणान्निजतनूज्ज्वलकीर्तिराशेः
सार्धं मयाधिगतदिव्यमहारहस्यः।

त्वत्सोदरस्य मम सोदर एष वीरो
दुःशासनः प्रतिपणोऽस्य वृकोदरस्य ॥ २८ ॥

(उभौ क्रीडतः ।)

शकुनिः—जितं जितं कौरवराजेन । अपरः पणः क्रियताम् ।

युधिष्ठिरः—

कर्णप्रावरणैः सहैकचरणानश्वाननैः किंनरां-
स्त्र्यक्षैस्तुल्यशिखान्वलीमुखमुखैर्यक्षांश्च रक्षांसि च ।
निर्जित्या कनकाद्रितो जनपदान्यो राजसूयक्रतौ
सम्राजं कृतवान्युधिष्ठिरमलं सोऽयं किरीटी पणः ॥ २९ ॥

भीमः—भवतस्तु कः पणः ।

यो भार्गवाद्भगवतोऽर्जितचापवेदो
द्रोणेन तुल्यगरिमा मम धर्ममित्रम् ।
स प्रीणितार्थिजनवाग्भिररिक्तकर्णः
कर्णः स्वयं प्रतिपणोऽस्य धनंजयस्य ॥ ३० ॥

(उभौ क्रीडतः ।)

शकुनिः—जितं जितं कौरवराजेन । तदपरः पणः क्रियताम् ।

युधिष्ठिरः—

सौहार्दात्प्रणयादथ प्रथिमतः स्नेहातिरेकाच्च वा
यो देवेन रथाङ्गिनापि समरं हित्वा करं लम्भितः ।
पाश्चात्यक्षितिपालनिर्मलयशःप्रस्तारहारान्हर-
न्सोऽयं मे नकुलः कुलैकतिलको युद्धप्रवीणः पणः ॥ ३१ ॥

भीमः—भवतस्तु कः पणः ।

दुर्योधनः—

नकुलस्यापि ते भ्रातुर्भ्राता प्रतिपणो मम ।
बिभ्रत्कीर्तिमहानावि विकर्णः कर्णधारताम् ॥ ३२ ॥

(उभौ क्रीडतः ।)

शकुनिः—जितं जितं महाराजदुर्योधनेन । तदपरः पणः क्रियताम् ।

युधिष्ठिरः—

हेलालोडितपाण्ड्यकेरलबलो यः सिंहलांल्लङ्घय-
न्माक्संक्षुभ्य विभीषणेन तरसा दूरात्करं लम्भितः।
नित्यं रावणनिर्जितामरहृतैर्यः संभृतो भूषणैः
सौम्यश्रीः सहदेव एष स पणः क्षत्रैकचूडामणिः॥ ३३॥

भीमः—भवतस्तु कः पणः।

दुर्योधनः—अनिर्जितो भ्राता विकर्ण एष मम पणः।

(उभौ क्रीडतः।)

शकुनिः—जितं जितं महाराजाधिराजेन। तदपरः पणः क्रियताम्।

युधिष्ठिरः—किं नामा[प]हारितम्। कः पुनरपरः पणः क्रियताम्।

शकुनिः—धर्मदारा द्रौपदी।

युधिष्ठिरः—

संभूता द्रुपदाध्वरे हुतभुजः पाण्डोर्नृपस्य स्नुषा
राधावेधमहापणेन विजिता राज्ञां पुरः पश्यताम्।
भूभृन्मौलिमणीन्द्रदीधितिजलैर्या स्नातपादाम्बुजा
सा देवी विनयाभिमानवसतिः कृष्णा वितृष्णा पणः॥ ३४॥

भीमः—भवतस्तु कः पणः।

दुर्योधनः—

ज्येष्ठत्वात्पाण्डुपूज्यस्य धृतराष्ट्रस्य या स्नुषा।
सा देवी देवरवती मम भानुमती पणः॥ ३५॥

सुनन्दा—(स्वगतम्।) एष स ज्येष्ठाभिः कनिष्ठानां विनिमयः।

(उभौ क्रीडतः।)

शकुनिः—जितं जितं महाराजदुर्योधनेन।

दुर्योधनः—दुःशासन, आनीयतां द्यूतदासी द्रौपदी।

(नेपथ्ये।)

यदादिशति पाण्डवकौरवेश्वरः।

दुर्योधनः—अपरः पणः क्रियताम्।

**युधिष्ठिरः**—न मे पणान्तरमस्तीति प्रतिभाति ।

**दुर्योधनः**—

वर्षाणि द्वादशारण्ये सह तिष्ठन्तु निष्ठया ।
अज्ञातचर्यया वर्षमावयोर्युधि जीयते ॥ ३६ ॥

(युधिष्ठिरस्तदेवानुवदति । उभौ क्रीडतः ।)

**शकुनिः**—जितं जितं महाराजदुर्योधनेन ।

(नेपथ्ये ।)

पञ्चानां या कलत्रं द्रुपदमखविधावद्भुतं जन्म यस्याः
पूता या राजसूयावभृथपरिगमे मन्त्रपूतैः पयोभिः ।
तामेतां द्यूतदासीं कुरुपतिनियमं मूर्ध्नि कृत्वा मयान्तः
केशेष्वाकृष्यमाणां शृणुत नृपतयो यस्य शक्तिः स पातु ॥ ३७ ॥

**दुर्योधनः**—कथमयं संपादितमदाज्ञः सद्रौपदीको वत्सो दुःशासनः प्राप्तः ।

(ततः प्रविशति यथानिर्दिष्टा द्रौपदी दुःशासनश्च । दुःशासनस्तदेव पठति ।)

**सुनन्दा**—(सहसोपसृत्य हस्तामोटं नाटयन्ती ।) दुःशासन, मुञ्च मुञ्च पाञ्चालीकेशपाशम् ।

**दुःशासनः**—(तामपनुद्य समन्तादवलोक्य विहस्य च ।)

यन्मुक्तः स्फारतारध्वनिभरितसभाकुञ्जगर्भः सरोषं
हुंकारः कातराणां तरलितहृदयः फाल्गुनस्याग्रजेन ।
कुर्वद्भिर्हारवल्लीनहननिबिडिताञ्जूटकूटान्नृपैस्त-
न्यस्ताः खड्गेषु रत्नत्सरुषु सरभसं संप्रहाराय हस्ताः ॥ ३८ ॥

**सुनन्दा**—(पुनः पाणिमोटनं नाटयित्वा ।)

अम्बाचुम्बितपल्लवानां बहुना स्नेहेन धृष्टद्युम्नो
येषां पुष्कलवेणिबन्धनकरः स आस्ते रात्रिंदिनम् ।
चण्डं पाण्डवगेहिन्याश्चिकुरे रे कर्षता त्वया
किं दुःशासन दुःसहाः कवलिता हालाहलाङ्कुराः ॥ ३९ ॥

---

१. प्राकृतच्छायेयम्.

द्रौपदी—वत्स दुःशासन, मुञ्च मुञ्च केशपाशम्। कथमेकवस्त्रा भूत्वा गुरुनरेन्द्रपुरतः संचरिष्ये।

दुःशासनः—(विहस्य।) नन्वपनयाम्येकवस्त्रतां कोटवीकरणेन। (बहुवस्त्रतापनयनं नाटयन्।)

याचन्नैकं द्रुपददुहितुः कृष्यते वस्त्रमस्या-
स्तत्स्थानेऽन्यद्भवति पिदधत्तावदङ्गं ततश्च।
खिन्नं चैतन्मम करतलं वाससां चैष राशि-
स्तन्मन्येऽसौ त्रिभुवनमनोमोहिनीं वेत्ति विद्याम्॥ ४० ॥

द्रौपदी—भो दुःशासन, मम किमपतिव्रताजनोचितं करोषि।

दुःशासनः—अये पाञ्चालि, पञ्चानां कलत्रं भूत्वा किमपि व्रीडसे। (साक्षेपम्।)

हे द्रौपदि त्वमसि कात्र पतिव्रतानां
किं दृष्टपञ्चपुरुषा वनिता कलत्रम्।
दुर्योधनस्य तदिमं भज वाममूरु-
मास्फालितं मुकुलिताङ्गुलिना करेण॥ ४१ ॥

द्रौपदी—(तदनादृत्याञ्जलिं बद्ध्वा।) हंहो सभासन्नस्थिता गुरवो नरेन्द्राश्च, द्रौपदी निर्णयं पृच्छति।

(नेपथ्ये।)

द्रौपदि, विकर्णस्त्वामाह—'कीदृशो निर्णयः'।

द्रौपदी—किमहं प्रथमं हारिता द्यूते आत्मा वा धर्मनन्दनेन।

(नेपथ्ये।)

प्रजावति, तवायमभिप्रायः—

यद्यहं हारिता पूर्वं भवामि द्यूतकिंकरी।
आत्मा वा हारितः पूर्वं तदा नास्मि च हारिता॥ ४२ ॥

दुःशासनः—अरे रे अकर्णविकर्ण, सभामध्यमध्यासीने भुवनपताकायदुर्योधने किमित्थं प्रलपसि।

---

१. कोटवी नग्ना स्त्री.

(प्रविश्य ।)

विकर्णः—(साक्षेपम् ।)

द्यूतं क्षत्रकुलोचितं न स भवेद्धेतुः पणः स्वामिनः
संरम्भः किमकाण्ड एव भवता सद्धर्म आलम्ब्यते ।
भो दुःशासन कः क्रमो द्रुपदजाकेशाम्बराकर्षणे
दुर्वृत्तं क्षमते न कस्यचिदयं भ्राता विकर्णस्तव ॥ ४३ ॥

दुर्योधनः—(सभ्रुकुटीबन्धम् ।) अरे रे धार्तराष्ट्रबटो, वाचाटोऽसि ।

विकर्णः—तदद्यप्रभृति

न्यायवादी विकर्णोऽत्र भवन्तो वयं बहिः ।
तद्यूयं शतमेकोनं षट् च संप्रति पाण्डवाः ॥ ४४ ॥

दुर्योधनः—तदतिमुग्धस्तव कतरः पन्थाः ।

विकर्णः—

यां मे बलः स बलवान्दलितप्रकम्पां
शिष्येषु सत्स्वपि महत्सु गदामदत्त ।
सा मे यदाऽऽदिशति हस्ततलावतीर्णा
दुर्वृत्तखण्डनविधौ मम सोऽत्र पन्थाः ॥ ४५ ॥

(समन्तादवलोक्य ।)

अत्रैकत्रासचिन्ताकुलमनसि नभःसिन्धुपुत्रे पवित्रे
द्रोणे द्राक्स्मश्रु शुभ्रं वलयति शकुनौ शिक्षयत्यक्षशिक्षाम् ।
कर्णे कर्णान्तिकस्थे हसति कुरुपतौ दृष्टयः पाण्डवानां
द्रष्टुं दुःशासनं च क्षितिपतितिलकं यान्ति धर्मात्मजं च ॥ ४६ ॥

(दुःशासनः 'हे द्रौपदि' (२।४१) इत्यादि पठति ।)

विकर्णः—(विचिन्त्य ।) अहो उचितकारिता पाण्डवानाम् ।

आकर्ण्य कौरवकुमारवचः प्रचण्ड-
मत्युल्लसन्ति गुरुरोषकषायताराः ।
भ्रान्त्वा दृष्टयो नृपतिसंसदि पाण्डवानां
दृष्ट्वा युधिष्ठिरमुखं पुनरापतन्ति ॥ ४७ ॥

(पुनरवलोक्य ।) अहो किमपि महारम्भः सभासदां क्षोभः ।

च्योतच्चूडामणीनां चलनझणझणत्कारिहारच्छटानां
प्रेङ्खोलत्कङ्कणालीकलकलमुखरैर्दोर्भिरुड्डामराणाम् ।
निःश्वासैः साट्टहासं किमिदमिदमितो वेल्लितभ्रूलतानां
संक्षोभो भूपतीनां विततमपि सभागर्भरन्ध्रं रुणद्धि ॥ ४८ ॥

(पुरोऽवलोक्य ।) अहो कौरवपतेराज्ञा । अहो सत्यता महीपतीनाम् ।

अस्मिन्महासदसि कौरवपाण्डवीये
क्षोभं गते द्रुपदजाचिकुराञ्चनाभिः ।
दुर्योधनेन भ्रुकुटी कुटिलीकृता च
जाताश्च भूमिपतयो लिखिता इवैते ॥ ४९ ॥

(सरभसं युधिष्ठिरमुपसृत्य ।) आर्य युधिष्ठिर, प्रतिष्ठस्व वनवासाय । द्यूतहारितमनुष्ठीयताम् ।

(सर्वे समुत्तिष्ठन्ति ।)

द्रौपदी—रे रे दुर्योधन,

एष रे कचकर्षणापरिभवः आमुक्तबन्धक्रम-
[1]स्तस्तस्त्यमेव चञ्चरीकरमणीयाकेशपाशच्छटा ।
नखाग्राङ्कुशकोटिपाटितमहादुःशासनोरःस्थली-
रक्तोल्लेखिकरेण निश्चितमिदं भीमेन या बध्यते ॥ ५० ॥

भीमः—रे रे दुर्योधन, भीमसेनस्य शृणु प्रतिज्ञाम् ।

तेनेयं याज्ञसेनी नृपसदसि हठात्केशहस्ते गृहीता
यश्चास्याः कोटवीत्वं बत विदधदितो वाससां राशिकारः ।
सोऽहं तेनैव रोषारुणनयनपटुः पाणिनोत्पाटितेन
त्वां हन्ता हन्त वक्षस्तटभुवि रटतो दुष्टदुःशासनस्य ॥ ५१ ॥

अपि च रे रे दुर्योधन,

नखक्रकचपाठनत्रुटितकीकसाद्वक्षसः
शिरासरणिभिर्मृधे रुधिरमुत्फलत्फेनिलम् ।

---

१. इयमपि प्राकृतच्छाया.

महाञ्जलिमयं रुषा हृदि निवेश्य दौःशासने
　　युधिष्ठिरसहोदरः शृणु वृकोदरः पास्यति ॥ ५२ ॥

किं चैकस्मिन्नपराद्धेऽपि तत्सहचारिणोऽप्यपराद्धारः । ततश्च ।

द्रोणादुपार्जितधनुर्निगमप्रकर्षा-
　　स्सर्वानपि स्थितवतो वयसि प्रकाशे ।
भ्रातॄञ्शतं तव हनिष्यति भीमसेनः
　　काले गदप्रहरणो रणकर्मशौण्डः ॥ ५३ ॥

ततश्च ।

दोर्दण्डमण्डलितचण्डगदाप्रहारै-
　　रामूलतस्तडदिति त्रुटितोरुसंधेः ।
दुर्योधनस्य विकटां मुकुटाग्रपीठीं
　　द्राग्लोठयिष्यति रणे चरणेन भीमः ॥ ५४ ॥

शकुनिः—निर्गच्छत वनवासाय । को हि द्यूतजितानामुद्विजते मौर्ख्येण ।

(इति निष्क्रान्ताः सर्वे ।)

इति महाकविश्रीराजशेखरकृते प्रचण्डपाण्डवापरनाम्नि बालभारते नाटके
द्वितीयोऽङ्कः ।



# कर्पूरमञ्जरीस्थश्लोकानां सूची ।

# बालभारतस्थश्लोकानां सूची।